ओ३म्


वर्षम्=२०
अङ्कौ=१,२
पूर्णाङ्कौ=२२६,२३०


# गुरुकुल-पत्रिका

## वेदाङ्कः


भाद्रपद-आश्विन २०२४
सितंबर-अक्टूबर १९६७

सम्पादकः
श्री भगवद्दत्तो वेदालङ्कार.

प्रकाशकः
श्री धर्मपालो विद्यालङ्कारः
स० मुख्याधिष्ठाता
गुरुकुलकांगड़ीविश्वविद्यालयः

उपसम्पादकः
श्री प्रा० बुद्धदेव एम.ए.


संस्कृतभागः — विषय-सूचिका — पृष्ठ


| | | |
|---|---|---|
| श्रुति-सुधा | | १ |
| वेद-सन्देशः | स्वामी श्रीभगवदाचार्यः | ३ |
| स्वामिदयानन्दस्य वेदविचारसरणिः | श्री रामनाथो वेदालंकार; | ५ |
| अग्निसहस्रनामस्तोत्रम् | श्री साम्बदीक्षितः | १० |
| वसन्ततिलकम् | प्रो श्री बुद्धदेव शर्मा एम.ए. वेदाचार्यः | १३ |
| वेदस्तोत्रम् | श्री जगन्नाथो वेदालंकारः | |
| वेदमूला. कथाः | श्री विनोदचन्द्रो विद्यालंकारः, एम.ए. | २० |
| चतुर्वेदविषयानुक्रमणी | श्री युधिष्ठिरो मीमांसकः | २४ |
| कापिलशास्त्रस्य वैदिकत्वम् | श्री उदयवीर शास्त्री | २७ |
| वेदवर्णितराजनीतिकराद्धान्ताः | श्री रघुवीरमुमुक्षुशास्त्री वेदालंकारः | ३० |
| श्रुतिमातुः वात्सल्यम् | श्री विश्वनाथ केशव छत्रे जोगलेकरवाडा | ३४ |
| मरुद्गणः | श्री निगम शर्मा, गुरुकुल कांगड़ी | ३९ |
| वेदगौरवम्—अनादिनिधनलक्षणम् | श्री स्वामी महेश्वरानन्द जी महाराजः | ४४ |
| यास्ककालिका विविधा वेदार्थपद्धतयः | श्री धर्मदेवो वेदवाचस्पतिः | ४७ |
| तन्मे मन. शिवसंकल्पमस्तु | श्री ब्र० याज्ञवल्क्यः—आर्यवानप्रस्थाश्रम | ५२ |
| वेदलहरी | श्रीहरिश्चन्द्रो रेणापुरकरः एम.ए | ५४ |

| विषयः | लेखकः | पृष्ठ |
| --- | --- | --- |
| मुखाकृतितत्त्वसमीक्षासूत्रम् | श्री डा० मङ्गलदेव शास्त्री | ५६ |
| हिन्दी विश्वभारती–चन्द्रतत्त्वानुसधान परिषद् बीकानेरम् | श्री विश्वनाथ मिश्र. | ५७ |
| वाक्यपदीयम् | श्रीसोमदेवशर्मा एम.ए. | ५८ |
| साहित्य-समीक्षा | श्री भगवद्दत्तो वेदालङ्कारः | ६० |
| सम्पादकीय टिप्पण्यः | श्री भगवद्दत्तो वेदालंकार | ६० |
| वैदिकधर्मगीतम् | श्रीपण्डितधर्मदेवो विद्यामार्तण्डश्चतुर्वेदी | ६२ |

## हिन्दीभाग

| | | |
| --- | --- | --- |
| वैदिक धर्मगीत | श्री पं० धर्मदेव विद्यामार्तण्ड | ६३ |
| वेद और आर्य | ले० श्री डा० मुंशीराम शर्मा | ६५ |
| अमृत ज्योति प्राप्ति और विस्तार | डा० श्री बद्रीप्रसाद पचोली | ३६ |
| श्रावणी और स्वाध्याय | प्रा० श्री भद्रसेन दर्शनाचार्य | ७४ |
| वेदों का प्रचार कैसे हो ? | श्री शङ्करसिंह वेदालंकार, एम०ए० | ७६ |
| दीनबन्धु सी.एफ ऐन्ड्रयूज़ | श्री दीनबन्धु सी.एफ ऐण्ड्रयूज | ८० |
| वैदिक साहित्य को गुरुकुल की देन | श्री विनोदचन्द्र विद्यालंकार एम.ए. | ८१ |
| वैदिक मनीषि शतायु श्री प० सातवलेकर गुरुकुल कांगड़ी मे | श्री पु पां. गोखले | ८८ |
| गुरुकुल-समाचार | श्री सूर्यप्रकाश 'मदन' विद्यालंकार | ६७ |
| वेदों के ऋषि | श्री प० भगवद्दत्त वेदालकार | १०१ |
| वैदिकभाषा का विकास | डा० सुधीरकुमार गुप्त | १८१ |

ओ३म्

# गुरुकुल-पत्रिका

[ गुरुकुल कांगड़ी विश्वविद्यालयस्य मासिक पत्रिका ]

## वेदाङ्कः

भाद्रपद-आश्विन २०२४, अगस्त-सितम्बर-अक्टूबर १९६७, वर्षम् २०, अङ्कौ १,२, पूर्णाङ्कौ २२९,२३०

## श्रुति-सुधा

ऋषि:-मेध्यातिथिः काण्वः । देवता अश्विनौ । छन्दः-गायत्री

ओ३म् या सुरथा रथीतमोभा देवा दिविस्पृशा ।
अश्विना ता हवामहे ।। ऋ० १।२२।२

(या) जो अश्वी (देवा) दिव्य गुण युक्त (सुरथा) उत्तम रथ वाले (रथीतमा) श्रेष्ठ रथी तथा (दिविस्पृशा) द्युलोक को स्पर्श करने वाले हैं (ता उभा अश्विना) उन दोनों अश्वियों का (हवामहे) हम आह्वान करते है

दोनों अश्वियों के प्रबुद्ध होने पर होता यह है कि वे अश्वी द्युलोक की ओर तथा हृदय-गुहा की ओर सोम सवन करने वाले के घर के प्रति आरोहण करते हैं, क्योंकि वे उत्तम रथों वाले व श्रेष्ठ रथी हैं। अपने रथों पर विराजमान होकर वे ऊर्ध्वारोहण में द्युलोक तक का स्पर्श करते हैं। अध्यात्म क्षेत्र में मन और बुद्धि की संयुक्त चेतना जब बाह्य विषयों में न जाकर ऊर्ध्व में मस्तिष्क की ओर तथा मस्तिष्क से भी ऊर्ध्व में द्युलोक की ओर आरोहण करती है। (मस्तिष्कादूर्ध्वः प्रेरयत्) तब ये अश्वी 'दिविस्पृशा' होकर दिव्य ज्ञान के अवतरण में सहायक होते हैं। इन रथों में जुते हुए अश्वों को ऊर्ध्व की ओर हांकने के लिए चाबुक की आवश्यकता है। वह चाबुक क्या है? इसका वर्णन अगले मन्त्र में इस प्रकार हुआ है।

ओ३म् या वां कशा मधुमत्यश्विना सूनृतावती ।
**तया यज्ञं मिमिक्षतम् ॥ ऋ० १।२२।३**

**(अश्विना)** हे अश्वियो ! (सूनृतावती) श्रेष्ठ परिमित तथा ऋतवाली (मधुमती) माधुर्य गुण युक्त (या वां कशा) जो तुम्हारी वाणीरूप चाबुक है (तया) उससे (यज्ञं इस ऊर्ध्वारोहण के यज्ञ को (मिमिक्षतम्) सिंचित करो।

ऊर्ध्वारोहण मे अश्वों को हांकने के लिए चाबुक (कशा) वाणी है। यह वाणी मधुर श्रेष्ठ, परिमित तथा ऋत से युक्त (सु+ऊन+ऋत) होती है। ऐसी वाणी इस यज्ञ को सींचती है। यह यज्ञ ऊर्ध्वारोहण का तथा हृदय गुहा मे बैठने का यज्ञ है। उपर्युक्त वाणी द्वारा इस यज्ञ-मार्ग का सिचन करना ही ऊर्ध्वारोहण के मार्ग मे अश्वो को प्रेरणा देना है।

ओ३म् नहि वामस्ति दूरके यत्रा रथेन गच्छथः ।
अश्विना सोमिनो गृहम् ॥ ऋ० १।२२।४

**(अश्विना)** हे अश्वियो ! तुम (यत्र) जहां (सोमिनः गृहम्) सोमसवन करने वाले यजमान का घर है वहां (रथेन गच्छथः) रथ से जाते हो, वह घर (वाम्) तुम्हारे लिये (दूर के नहि अस्ति) दूर नही है।

सोम-सवन करने वाले यजमान (आत्मा) का घर मस्तिष्क तथा हृदय-गुहा के अन्तरतम में है। वहां तक मन और बुद्धिरूपी अश्वियों के संयुक्त प्रयत्न से पहुंचा जा सकता है।

# वेद-सन्देशः

सारस्वतसार्वभौमपंडितराजपरिव्राजकाचार्यस्वामि श्रीभगवदाचार्य
राजनगर सोसाइटी अहमदावाद—७

विद ज्ञाने, विदलृलाभे इत्येताभ्या धातुभ्या निष्पन्नो वेदशब्दो वेदार्थेन वेदोपदेशेन च मानवाना नैरन्तर्यण दुष्कृतिमपनीय सुकृति चोपनीय श्रेय-सुधया चोपसिच्य परम कल्याण प्रणयतीत्यस्माक वेदानुयायिना सम्प्रत्यय, वेदो लौकिकीमपि सिद्धि साधयति पारलौकिकीमपि ता प्रसिद्धि नयतीत्यप्य-स्माक प्रत्यय ।

वेदराशिर्न केवलं भारतीयानामेव प्रत्युत सर्वेषा भविना भव्यानामभारतीयानामपि श्रेयस श्रित-शङ्कर शङ्कर इव प्रतिष्ठमान सर्वत्रानुशेते । वेदो नैकदेशीय । तज्ज्ञानमपि न नियत देश प्रति निय तान्वा मानवान्प्रति । यो न नियते काले विचरति न वा नियते देशे प्रचरति न वा नियते मानवमानसे पद सन्दधाति स वेद । एतनैव वेदस्य वेदत्व सिध्यति । मानवविभागो वेदस्याज्ञात एव । वेदस्तु वेद । ज्ञानरूपो हि स । लोकेप्युक्तम्—अय निज परो वेति गणना लघुचेतसामिति । न खलु वेदो लघुचेता । महीयानसौ । अत एव स उपदिशति—

> यत्रेदानीं पश्यसि जातवेद-
> स्तिष्ठन्तमग्न उत वा चरन्तम् ।
> यद्वान्तरिक्षे पथिभि पतन्त
> तमस्ता विध्य शर्वा शिशान ॥

अत्र तिष्ठन्तमित्यनेन गृहस्थ उच्यते । चरन्त-मित्यनेन परिव्राजक इतीष्यते । अन्तरिक्ष इत्यनेन योगिन उच्यन्ते । अथवा अन्तरित्यनेन दूरदेशो विदेशो वोपलोक्ष्यते । अन्तर् ईक्षत इति । दूरस्थोहि अन्तर् ईक्षते । न समीपस्थ । अनेकार्थानि हि अव्ययपदानि । अत एवेहान्तर्‌शब्दोन्तरमाह । अर्थ-निष्ठो हि शब्दः, न हि शब्दनिष्ठोर्थ । अर्थात् प्रत्याययितु शब्दाना प्रवृत्ति, न तु शब्दान् प्रत्या-ययितुमर्थप्रवृत्ति । अत एवोक्तम्—

> न सोस्ति प्रत्ययो लोके य शब्दानुगमादृते ।
> अनुविद्धमिव ज्ञान सर्वं शब्देन भासते ॥

न हि वेद कमपि देश विजानाति न वा वर्ण न वा जातिम । न वा सम्प्रदायम् । सर्वेभ्य पृथग्भूय वितिष्ठमानो भगवान्वेद स्वातन्त्र्येण सर्वानेव भूमिष्ठान् नरान् प्रबोधयितु प्रवृत्त । किं प्रबोध-यत्यसौ ? अज्ञातज्ञापकता हि वेदस्य । यदज्ञात तद् बोधयति । किमज्ञात तदाह—

१ अलब्ध स्पृणुहि जातवेद ॥
ऋ १० ८७ ७ ।

२ तमारभस्व समिधा यविष्ठ ॥
ऋ १० ८७ ८ ।

३ परा शृणीहि तपसा यातुधानान् ॥
ऋ १० ८७ १४ ।

४ पराचिषा मूरदेवाञ्छृणीहि
परासुतृपो अभि शोशुचान ।
परार्द्य देवा वृजिन शृणन्तु ।
ऋ १० ८७ १४ ।

५ तीक्ष्णेनाग्ने चक्षुषा रक्ष यज्ञम् ॥
ऋ १० ८७ ९ ।

(१) जात जात त्व वेत्सीति हे जातवेद परमेश्वर, अलब्ध लम्भयित्वा स्पृणुहि रक्ष । (२) हे यवत्म समिधा दीप्त्या ज्ञानेन तमज्ञानराशि नाशयितुमारभस्व येन जगति सर्वे जीवा निपीडिता सन्ति । (३) मूरदेवान् मूरो हिसा हिसाप्रवृत्ति-मान्वा । एव च मूरदेवा प्राणिहिंसका । परकार्य-हिंसका वा । परस्वार्थद्रोग्धारो वा । ताञ् शृणीहि छिन्धि । परासुतृपोपि परेषामन्येषामसुभिर्ये तृप्यन्ति तानपि तानपि छिन्धि । किं च देवा विद्वांस स्वोपदेशेन वृजिन सर्वत्रावस्थित प्रायमपि परा-

शृणन्तु । (४) तीक्ष्णेनाग्ने परमेश्वर चक्षुषा यज्ञ देवं धर्मात्मानं रक्ष ।

एतत्सर्वं परमेश्वरं सम्बोध्योक्तं तथापि सामान्येनायमुपदेशोन्यत्रापि संबध्यते । न केवलं ब्राह्मणैर्वा क्षत्रियैर्वा वैश्यैर्वा शूद्रैर्वैतत्कर्तव्यम् । सर्वैरेव कर्तव्यम् । न हि ब्रह्म केवलं ब्राह्मणदर्शि भवति । सर्वानेव स समानेनैव भावेन पश्यति । अत एव यदि आर्या अपि मूरदेवा भवन्ति तेषामपि "त्रेधा मूल यातुधानस्य वृश्च" (ऋ० १० ८७ १०) इत्यनुसृत्य छेद प्राप्त एव । अनार्याणा च प्राप्त एव सः । 'वाचारतेन शरव ऋच्छन्तु मर्मन् ।" ऋ० १० ८७ १५ । इत्यनेन छलिन कपटिनं छिन्धीत्युक्तम् । तेभ्यो दुष्टेभ्यो दूरत पलायनं वा लक्षणयोपदिष्टम् ।

"सखे सखायमजरो जरिम्णेऽग्ने मर्ता अमर्त्यस्त्वं न" (ऋ० १० ८७ २१) समानश्यातिमन्तमुद्दिश्योपदिश्यते—हे सखे, सखाय समानधर्माणं मित्रं वा जरिम्णे कुरु । जरापर्यन्त यथा जीवेत्तथा कुरु । मित्रधर्म एषः । स्वमित्राणां यथायुर्वृद्धिर्भवेत्तथा यतितव्यं धर्मवृद्धये ।

न हि वर्णविभागाय वेदप्रवृत्तिः । विभागो हि नाश । न हि नाशाय पारमेश्वरं ज्ञानं प्रवृत्ति विदध्यात् । वेदस्तु सर्वकल्याणमेव सदाभिवाञ्छति । सर्वधर्मा सर्वकर्मा सर्वभूत स वेद उपदिशति—

समानी व आकूति समाना हृदयानि वः ।
समानमस्तु वो मनो यथा वः सुसहासति ।।

सर्वमनुष्यानुद्दिश्य वेदो ब्रूते युष्माक सङ्कल्पोध्यवसायो वा समानप्रकारको भवतु । समानप्रकारक इत्युक्त्याधर्मं वारयति । न हि सर्वेषां सकल्पः समानप्रकारक एव भवति । य कोऽपि युष्माक सङ्कल्प स्यात् तत्रानार्यत्वस्पर्शो न स्यादितिभाव । युष्माक मनोपि समानमेवास्तु । अत्रापि सामान्यम् आर्यविगर्हणाराहित्यम् ।

एव च भगवान् वेद सर्वेषु मनुष्येषु भेदराहित्येन सौहित्येन च वर्तमानतोपदिश्यते । सर्व एव मानवा मानवत्वेन समाना एव । गुणवैशिष्ट्येन भवतु नाम वैशिष्ट्य यत्र कुत्रापि । जात्यन्तरं वर्णान्तर च तत्र नैव भवति । गुणप्रकर्षेण प्रकृष्टोश्व इति तु भवति परमप्रकृष्टगुणोश्वोश्वो न भवति इति तु न । एव मनुष्येष्वपि विज्ञेयम् । अत एव भगवान् वेदो ब्रूते समानी व आकूतिरिति ।

यथा गुरु शिष्यानुपदिशति सत्य युष्माभिर्वक्तव्यमिति । तमुपदेश स्वीकृत्य शिष्या ब्रुवन्ति सत्यमस्माभिर्वक्तव्यमिति । तथैवात्र मन्त्रोपि संगमनीय इति ।

---

दाधार क्षेममोको न रण्वो यवो न पक्वो जेता जनानाम् ।
ऋषिर्न स्तुभ्वा विक्षु प्रशस्तो वाजी न प्रीतो वयो दधाति ।।
( ऋ० १ ६६ २ । )

वह सुखदायक घर की भांति हमारे सब क्षेम को धारण करता है । वह पके हुये जौ के समान है । वह मनुष्यो का विजेता है, स्तुति गाने वाले ऋषि के समान है; लोगों में उसकी ख्याति है; वह मानो हमारा हर्षयुक्त घोड़ा है, वेगरूपी घोड़ा; वह हमारे वृद्धि-विकास को धारण करता है ।

# स्वामिदयानन्दस्य वेदविचारसरणिः

श्री रामनाथो वेदालंकार.

श्रीसमन्विता लोकोपयोगिसकलज्ञानविज्ञान-सारस्वतसागरा ऋग्यजुःसामाथर्वाणश्चत्वारो वेदा आदिकालादेव भारतीयानां परमश्रद्धास्पदत्वं प्राप्ता अन्तर्गर्भितैरहस्यैरुपदेशैश्च पावयन्तो जनानां हृदयालंकारभूता विराजन्ते। पूर्वं वैदिक-भाषायाः सर्वत्र प्रसृतत्वात् तदर्थबोधे न कापि बाधानुभूयते स्म। तदुत्तरम् ऋषयः साक्षात्कृत-धर्माणः सर्वमर्थजातं हस्तामलकवत् पश्यन्तोऽनधि-गतवेदार्थरहस्यान् प्रति सकलं श्रुतितत्त्वमुदीरयन्ति स्म। आचार्यशिष्यपरम्परया श्रूयमाणाः श्रोतॄणां श्रोत्रशष्कुलीं रसार्द्रतां नयन्त्योऽपि कालक्रमेण तथा विलुप्तार्था अजनिषत यथा कौत्सादयः केचन मन्त्राणां निरर्थकतामेव जगुः। तदैव परम-कारुणिकैर्विपश्चिद्भिर्निरुक्तादयो वेदव्याख्या-ग्रन्था निरमायिषत। श्रीमद्भिः स्कन्दस्वामि-उद्गीथ – वेङ्कटमाधव-आत्मानन्द–आनन्दतीर्थ–सायण–महीधरप्रभृतिभिराचार्यैर्यथामति वेदभाष्ये-ऽपि प्रयत्नो निष्पादितः। वैदेशिका अपि केचिद्-विद्वांसः श्रीविल्सन-ग्रिफिथ-ग्रासमैन-लुड्विग-ओल्डनबर्ग-ह्विटने-बैनफी-मैक्समूलरप्रभृतय आंग्लजर्म-नादिभाषासु वेदान् तदंशान् वा सटिप्पणम-नूदितवन्तः। संस्कृतभाष्येषु प्रमुखतः सायणभा-ष्यमेव प्रचारमलभत। अस्मिन् युगे वेदमूर्तयः श्री स्वामिदयानन्दमहाभागा वैदिकशिक्षाप्रसाराय बद्धपरिकरा वेदभाष्यप्रणयने रुचिमकार्षुः। तैर्वाज-सनेयिमाध्यन्दिनयजुर्वेदस्य सम्पूर्णम् ऋग्वेदस्य च सप्तममण्डलस्थद्विषष्ठितमसूक्तस्य द्वितीयमन्त्रं यावद् भाष्यं व्यरचि। सन्ति तदीयभाष्यस्य काश्चन तादृश्यो विशेषता या वेदोद्धारं काम्यमानैः सुधीभिरवश्यं विचारणीयाः। दिङ्मात्रं किञ्चित् प्रदर्श्यते।

## वेदार्थे त्रिविधप्रक्रिया.

वेदमन्त्राणां विषये त्रिविधाः प्रक्रियाः पूर्वत एव प्रचलिता यदनुसारम् आधिदैविका आधिभौ-तिका आध्यात्मिकाश्चार्थाः क्रियन्ते। अत्रैव यज्ञ-परा ज्योतिष्परा राष्ट्रपरा इतरे चार्था अपि समाविशन्ति। स्वयं वेदेष्वेव विविधार्थानां संकेता उपलभ्यन्ते। विविधार्थदर्शनं प्राक्तनानामृषीणा-मतीव प्रियमासीदित्यत्र ब्राह्मणारण्यकोपनिषत्सु नैके प्रसंगाः साक्षिणः। यास्कीयनिरुक्ते बहवो मन्त्रा अधिदैवताध्यात्मदिशा व्याख्याता। इति निरुक्तपरिशिष्टे 'चत्वारि वाक् परिमिता पदानि, ऋ१.१६४.४५' इत्यादिमन्त्रस्य व्याख्याने कतमानि तानि चत्वारि पदानीति विचारे 'इत्या-र्षम्', इति वैय्याकरणाः, 'इति याज्ञिकाः', 'इति नैरु-क्ताः', 'इत्येके', 'इत्यात्मप्रवादाः' इत्येवं षट् पक्षाः प्रदर्शिताः। एकस्मिन् स्थले परिव्राजकपक्षोऽपि निरु-पितः। स्कन्दस्वामिनस्तु स्पष्टैर्वचोभिरुदीरयामासुः– "सर्वदर्शनेषु च सर्वे मन्त्रा योजनीयाः। कुतःस्वप मेव भाष्यकारेण सर्वमन्त्राणां त्रिप्रकारस्य विषयस्य प्रदर्शनाय अर्थं वाचः पुष्पफलमाह इति यज्ञादीनां पुष्पफलत्वेन प्रतिज्ञानात् (निरुक्तम् ७.५, स्कन्द-टीका)। ऋग्वेदस्य 'अस्यवामीय' सूक्ते आत्मा-नन्दभाष्यं सर्वमध्यात्मपरमेव, यस्य सायणा-चार्येण प्रायशोऽधिदैवतमधियज्ञं वा व्याख्यानं विहितं, यद्यपि केचिन्मन्त्रा अध्यात्मदिशापि व्याख्याताः। तच्छैल्या प्रथममन्त्रं व्याख्याय 'एवमुत्तरत्रापि अध्यात्मपरतया योजयितुं शक्यं, तथापि स्वरसत्वाभावाद् ग्रन्थविस्तरभयाच्च न लिख्यते' इति मन्त्राणामनेकार्थकत्वं सायणाचार्यो-ऽप्यजूघुषदेव। स्वभाष्येऽप्यत्रापि तेन क्वचित्-क्वचिदध्यात्मपरोऽर्थः प्रकाशितः। एतेन त्रिविध-

प्रक्रिया प्राक्तनानां सम्मतेति निर्विवादमेव । तथापि भाष्यकारैर्मुख्यतो मन्त्राणां यज्ञपरतयैव व्याख्यानात् नेतरेऽर्थाः स्फुटतामभजन्त, न च वेदानां विस्तीर्णं गौरवं पाठकानां हृदि पदमधत्त ।

स्वामिदयानन्देन स्वभाष्ये त्रिविधार्थप्रक्रिया सविशेषमुपयुक्ता । ऋग्भाष्यारम्भ एव प्रथमवर्गस्याग्निदेवताकानां पञ्चानामपि मन्त्राणां परमेश्वरपरो भौतिकाग्निपरश्च द्विविधोऽर्थः सप्रमाणमुपन्यस्तः । "अत्राग्निशब्देन परमार्थव्यवहारविद्यासिद्धये परमेश्वरभौतिकौ द्वावर्थौ गृह्येते । पुरा आर्यैर्यश्च विद्यानाम्ना शीघ्रगमनहेतुः शिल्पविद्या संपादितेति श्रूयते साग्निविद्यैवासीत्" इति प्रथममन्त्रस्य भावार्थे तल्लेखः । इतरत्र अग्निपदेन विद्युत, सूर्यं, जाठराग्निं, सेनापतिं चापि गृह्णाति । अयं वाचकलुप्तां श्लेषञ्चालंकारं स्वीकृत्य मन्त्राणामर्थद्वयं प्रायः प्रतनुते । उषसां व्याख्याने न केवलं प्रकृतिपरेणार्थेन सन्तुष्यति किन्तु तन्मुखेन नारीपरमप्यर्थं सचमत्कृति प्रदर्शयति । अश्विनौ तत्कृते न पुण्यकृतौ राजानौ नाप्यैतिहासिकौ देवानां भिषजौ परं द्यावापृथिव्यौ, सूर्याचन्द्रमसौ, सूर्योषसौ, अध्यापकोपदेशकौ, यजमान-ऋत्विजौ, सभासेनेशौ, सुशिक्षितौ, स्त्रीपुरुषौ, प्राणापानौ चापि तत्पदवाच्यौ । आपो न केवलं प्राकृतिकजलानि परं पवित्रजलानीव शुभगुणव्यापिकाः कन्याः, जलवद् वर्तमाना मातरः, जलानीव शान्तशीला विदुष्यः, आप्ताः प्रजाः प्राणाश्चापि तत्पदेनाभिधेयाः । आदित्यो न केवलं सूर्यः, किन्तु विनाशरहित परमेश्वरो जीवः प्राणश्चापि । वरुणो न कश्चिज्जलाभिमानी देवः, किन्तु परमेश्वरो, जीवात्मा, राजा, न्यायाधीशः, सेनेशः, प्रशस्तविद्योऽनूचानो विद्वानध्यापकः, सूर्यो वायुश्च । इन्द्रो न कश्चित् स्वर्गाधिपतिर्देवराजः, किन्तु अग्निर्विद्युत् सूर्यः, समर्थो राजा, इन्द्रियवान् जीवः, परमैश्वर्यवान् सभाशालासेनान्यायाधीशः, पूर्णविद्यो वैद्यश्च । रुद्रो न पुराणप्रतिपादितः शशिकलामौलिः सर्वावेष्टितशरीरः शिवः, प्रत्युत पापिनां रोदकः पुण्यात्मनां दुःखद्रावकः परमेश्वरः, जीवात्मा, शत्रुरोदकः सेनापतिः, रोगापहर्ता वैद्यः प्राणश्च । विष्णुर्न वामनावतारधारी कश्चिद् देवविशेषः, किन्तु यो वेवेष्टि व्याप्नोति चराचरं जगत् स परमेश्वरः, स्वदीप्त्या व्यापकः सूर्यः, यज्ञः, सकलविद्यायोगाङ्गव्यापी योगिराजः, व्यापनशीलः प्राणश्च ।

भाष्यकारोऽयं यत्र तत्र स्वभाष्येऽध्यात्मविद्यां, प्राणविद्यां, भूगोलविद्यां, खगोलविद्यां शिल्पविद्यां, धर्मं, ज्योतिषं, राजनीतिं, चिकित्सां, ब्रह्मचर्यं, गार्हस्थ्यं, गुरुशिष्यव्यवहारम् इत्यादीन् विविधविषयान् निरूप्य न केवलं कर्मकाण्डं, परं मानवोपयोगिसकलविज्ञानजातमत्र निहितमित्याश्चर्यकरेण पाण्डित्येन प्रदर्श्य वेदा इमे गोपालकानां निरर्थकानि गीतकानीत्याभाणकेऽपि प्रहारमदात् । एवं प्राक्तनैर्महर्षिभिः सादरं स्वीकृतां त्रिविधप्रक्रियां स्वभाष्ये निवेशयन्नयं विपश्चिद्वरोऽस्माभिरभिनन्दनीय एव ।

## विनियोगाऽपरतन्त्रत्वम्

प्राक्तनैराचार्यैर्वेदमन्त्रा यज्ञादिषु विनियुक्ताः। तद्विषयेऽयं मन्यते यन्न ते विनियोगा नित्याः । ततोऽन्यत्रापि मन्त्रा विनियोक्तुं शक्यन्ते । प्राचीनेष्वपि नैतदस्ति यदेकस्य मन्त्रस्य सर्वैराचार्यैरेकस्मिन्नेव विधौ विनियोगः कृतः स्यात् । अतो भाष्यकरणसमये न तेषामनुसरणमवश्यकर्तव्यत्वेन मान्यतामर्हति । एतद् विचिन्त्यैव स्वामिना स्वभाष्ये पुरातनविनियोगमुपेक्ष्य सर्वथा स्वतन्त्ररूपेण मन्त्रार्थाः प्रकाशिताः । एषा खलु वेदार्थविषये तस्य स्वामिनोऽपूर्वा क्रान्तिः । तदीययजु-

र्भाव्यात् कानिचिदुदाहरणान्यत्र प्रस्तूयन्ते ।

आदावेव 'इषे त्वोर्जे त्वा' इति कण्डिकायां कर्मकाण्डे 'इषे त्वा' इति मन्त्रेण पलाशशाखां छिनत्ति–हे शाखे, इषे वृष्ट्यं त्वां छिनद्मि; 'ऊर्जे त्वा' इत्यनेन शाखां संनमयति–ऊर्जे वृष्टि-रसाय त्वां संनयामि ऋजूकरोमि । परं स्वामिना परमात्मपरमिदं व्याख्यातम्–इषे अन्नविज्ञानयोः प्राप्तये त्वा विज्ञानस्वरूपं परमेश्वरम्, ऊर्जे परा-क्रमोत्तमरसलाभाय त्वा अनन्तपराक्रमानन्दरस-घनम् इति । मूले तावत् पलाशशाखायाः, छेदनस्य, ऋजूकरणस्य च न कोऽपि संकेतः, अतस्तत्स्थाने परमेश्वरस्य ग्रहणं चेत् क्रियते तर्हि न किञ्चिद् दूषणं प्रत्युत भूषणमेव ।

"कस्त्वा युनक्ति स त्वा युनक्ति कस्मै त्वा युनक्ति तस्मै त्वा युनक्ति । कर्मणे वां वेषाय वाम् ॥ (यजुः १।६)" इत्यत्र कर्मकाण्डे कस्त्वेति मन्त्रः पात्र प्रत्युच्यते । प्रणीतानामपांधारक हे पात्र, त्वां कः पुरुषो युनक्ति आहवनीयस्योत्तरभागे स्थाप-यतीति प्रश्नः । तस्योत्तरं स त्वा युनक्ति । तच्छब्दः प्रसिद्धार्थवाची । सर्वेषु वेदेषु जगन्नि-र्वाहकत्वेन प्रसिद्धो यः प्रजापतिरस्ति स एव पर-मेश्वरः हे पात्र त्वां युनक्ति इत्युत्तरम् । कर्मणे वाम् वेषाय वाम् इति शूर्पम् अग्निहोत्रहवणीं च प्रति संबोध्यते—हे अग्निहोत्रहवणि, हे शूर्प, वां युवां कर्मणे कर्मार्थम् अहमाददे, वेषाय सूचित-कर्मसु व्याप्त्यर्थं च युवामहमाददे इति महीधरः । परं स्वामिना पात्रस्य स्थाने मनुष्यो गृहीतः, अग्निहोत्रहवण्याः शूर्पस्य च स्थाने कर्ताकारयि-तारौ अध्येत्रध्यापकौ च–'कः को हि सुखस्वरूपः त्वा क्रियानुष्ठातारं मनुष्यं पुरुषार्थे युनक्ति नियुक्तं करोति । स परमेश्वरः त्वा विद्यादिशुभगुणानां ग्रहणे विद्यार्थिनं विद्वांसं वा युनक्ति योजयति । कर्मणे पूर्वोक्ताय यज्ञाय वां कर्ताकारयितारौ वेषाय सर्वशुभगुणविद्याव्याप्तये वाम् अध्येत्रध्यापकौ" इति ।

अग्निषोमीयपशुप्रधाने षष्ठेऽध्याये "वाचं ते शुन्धामि प्राणं ते शुन्धामि (यजुः ६।१४)" इत्यादयो मन्त्राः कात्यायनेन मृतस्य पशोरङ्ग-शोधने विनियुक्ताः–'पशोः प्राणाञ्छुन्धति पत्नी' इति । पत्नी पशुसमीप उपविश्य मृतस्य पशोः प्राणान् मुखादीन्यष्टौ प्राणायतनानि प्रतिमन्त्रं शुन्धति शोधयति अद्भिः स्पृशतीति महीधरकृत सूत्रार्थः । परं स्वामिवर्येणैतद् गुरुशिष्यपरं व्याकृतम् "हे शिष्य, विविधशिक्षाभिस्तेऽहं वाचं शुन्धामि, ते प्राणं शुन्धामि, ते चक्षुः शुन्धामि, ते श्रोत्रं शुन्धामि, ते नाभिं शुन्धामि, ते मेढ्रं शुन्धामि, ते पायुं शुन्धामि, ते चरित्रान् शुन्धामि" इति । "गुरुभिर्गुरुपत्नीभिश्च वेदोपवेदवेदांगोपांगशिक्षाया देहेन्द्रियान्तःकरणात्ममनः–शुद्धिशरीरपुष्टिप्राणस-न्तुष्टीः प्रदाय सर्वे कुमाराः सर्वाः कन्याश्च सद्गुणेषु प्रवर्तयितव्या." इति भावार्थश्च व्याहृतः। अत्र कतरस्मिन्नर्थे गरीयस्त्वमिति सुधिय स्वय-मेव विभावयन्तु ।

दशमाध्याये राजसूयप्रसंगे "सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयात्, यजुः १०.५," इत्येष मन्त्रः कर्मकाण्डे व्याघ्रचर्मास्तरणे विनियुक्तः, परं महर्षिदयानन्दो राजपरं व्याचष्टे—"हे राजन्, यथा त्वं सोमस्य त्विषिरसि तथाहमपि भवेय-मिति ।" अत्रैवाष्टमे "क्षत्रस्योल्बमसि" इति मन्त्रेण तार्प्यं परिधापयति । क्षौमं वल्कलं घृताक्तमवस्त्रं वा तार्प्यदैवतम् । हे तार्प्य, त्व क्षत्रस्य यजमानस्य उल्वं गर्भाधारभूतमुदकम-सीति । ततः 'क्षत्रस्य जराय्वसीति' मन्त्रेण पाण्डव रक्तकम्बलं परिधत्ते । 'क्षत्रस्य योनिरसी' त्येतेन उष्णीषं शिरसि संवेष्ट्य तत्प्रान्तौ परिहितवासो नीव्यां गोपयति नाभिदेशे वेष्टयति वा । परं महर्षिणा सर्वमेतद् राजपरं विवृतम्—हे राजन्,

त्व क्षत्रस्य राजकुलस्य उल्ब बलमसि, क्षत्रस्य क्षत्रियस्य जरायु वृद्धावस्थाप्रापकमसि, क्षत्रस्य राजन्यस्य योनिः निमित्तमसि, क्षत्रस्य राज्यस्य नाभिः बन्धनमसीत्यादि ।

अस्मिन्नेव प्रसंगे कर्मकाण्डे षड्विंशी कण्डिका आसन्दीनिधानपरा स्वीकृता–"स्योनासि सुषदासि क्षत्रस्य योनिरसि । स्योनामासीद सुषदामासीद क्षत्रस्य योनिमासीद (यजु १०।२६)।।" आसन्दीं व्याघ्रचर्मदेशे निदधाति–हे आसन्दि 'स्योनासि सुषदासि,' त्वं स्योना सुखरूपासि, सुषदासि सुखेन सीदन्ति यस्यां सा सुषदा सुखेनोपवेष्टुं योग्यासि । ततः आसन्द्यां वस्त्रमाच्छादयति–'क्षत्रस्य योनिरसीति' । तदनन्तरं यजमानम् आसन्द्यामुपवेशयति–'स्योनामासीद सुषदामासीद क्षत्रस्य योनिमासीद' इति । परं स्वामिना राजपत्नीपरमेतत् संगदितम्–हे राज्ञि, स्योना सुखरूपा, सुषदा या शोभने व्यवहारे सीदति सा त्वमसि, क्षत्रस्य राजन्यायस्य योनिः गृहे न्यायकर्त्री असि; स्योनां सुखकारिकां, सुषदां शुभसुखदात्रीं, क्षत्रस्य क्षत्रियकुलस्य योनिं राजनीतिमासीदेति । भावार्थश्चायमाकृष्टः–"राजपत्नी सर्वासां स्त्रीणां न्यायसुशिक्षे च सदैव कुर्यात् । नैतासाम् एते पुरुषैः कारयितव्ये । कुतः ? पुरुषाणां समीपे स्त्रियो लज्जिता भीताश्च भूत्वा यथावद् वक्तुमध्येतुं च न शक्नुवन्त्यतः' इति ।

चतुर्दशाध्याये "मूर्धासि राड् ध्रुवासि धरुणा धर्त्र्यसि धरणी । आयुषे त्वा वर्चसे त्वा कृष्यै त्वा क्षेमाय त्वा (यजुः १४।२१) इत्येतैर्मन्त्रैः सप्तबालखिल्यसंज्ञा इष्टका उपदधाति–हे इष्टके, त्वं मूर्धा मूर्धवदुत्तमा, राड् राजमाना चासीत्यादि । परं तत्रभवतां स्वामिनां विदुषी स्त्री देवतात्वेनाभीष्टा–हे स्त्रि, या त्वं सूर्यवन्मूर्धासि, राडिव ध्रुवासि, धरुणा धरणीव धर्त्र्यसि, तामायुषे त्वा, वर्चसे त्वा, कृष्यै त्वा, क्षेमाय त्वामहं परिगृह्णामीति ।

त्रयोविंशेऽध्यायेऽश्वमेधप्रसंगे 'नार्यस्ते पत्न्यो लोम विचिन्वन्तु मनीषया (यजुः २३।३६)' इति मन्त्रेण नारीभिर्मेध्याश्वस्य लोमानि पृथक् क्रियन्ते । परं स्वामिमते लोमशब्दोऽनुकूलवचनपरः—'हे विदुषि अध्यापिके, नार्यः पत्न्यस्ते लोम अनुकूलं वचनं विचिन्वन्तु सञ्चितं कुर्वन्तु । पुनर्नार्योऽश्वस्य शरीरे सूचीभिः सीमारेखा उत्पादयन्ति–"रजता हरिणीः सीसा युजो युज्यन्ते कर्मभिः । अश्वस्य वाजिनस्त्वचि सिमाः शम्यन्तु शम्यन्तीः (यजुः २३।३७)।" स्वामिमते तु रजताविशब्दाः स्त्रीपराः–' रजताः अनुक्ताः हरिणीः प्रशस्तो हरो हरणं विद्यते यासां ताः, सीसाः प्रेमबन्धिकाः, अत्र षिञ् बन्धने इत्यस्मादौणादिकः क्सः प्रत्ययोऽन्येषामपीति दीर्घ, युज. समाहिताः स्त्रियो युज्यन्ते कर्मभिः धर्म्याभिः क्रियाभिः । अश्वस्य व्याप्तुं शीलस्य वाजिनः प्रशस्तबलवतो (विवाहितपतेः) त्वचि संवरणे सिमा. प्रेम्णा बद्धाः शम्यन्तु आनन्दन्तु शम्यन्तीः शमं प्राप्नुवतीः प्रापयन्त्यो वा" इति ।

अग्रे चाश्वमेधेऽश्वो विशस्यते–कस्त्वाच्छ्यति कस्त्वा विशास्ति कस्ते गात्राणि शम्यति । क उ ते शमिता कविः (यजु. २३।३९)।" "हे अश्व, कः प्रजापतिः त्वा त्वामाच्छ्यति छिनत्ति । हे अश्व, कः त्वां विशास्ति त्वचा वियोजयति ? ते तव गात्राणि कः शम्यति शमनेन हविः करोति । क उ कश्च प्रजापतिरेव कविर्मेधावी ते तव शमिता शमयिता । प्रजापतिरेव सर्वं करोति नाहमित्यर्थः" इति महीधरः । स्वामिमते तु अध्यापकः शिष्यं पृच्छति–"हे अध्येतः, कस्त्वाम् आच्छ्यति समन्ताच्छिनत्ति तवाध्ययने विघ्नमुत्पादयति? कस्त्वां विशास्ति विशेषेणोपदिशति? कस्ते तव गात्राणि अंगानि

शम्यति शाम्यति शम प्रापयति ? कस्ते शमिता यज्ञस्य कर्ता कवि सर्वशास्त्रविदिति ।"

पञ्चत्रिंशेऽध्याये पितृमेधप्रकरणे "श वात श हि ते घृणि श ते भवन्त्विष्टका –(यजु ३५।८,९) इत्याशीर्मन्त्रद्वय कात्यायनेनेत्थ विनियुक्तम्, 'श वात इति यथांग कल्पयित्वा इष्टका निदधाति मध्ये तूष्णीमिति (का० २१ ४ ८)। तत्र महीधरस्याय स्पष्टीकार –श वात इति मन्त्र-द्वयेन (मृतयजमानस्य) तानि मध्ये न्यस्तान्यस्थीनि यथाङ्ग कल्पयित्वा यदस्थि यस्याङ्गस्य तेनास्थ्ना तदगकल्पनया प्राक्शिरस पुरुषाकृति कृत्वा तन्मध्ये पादमात्रामिष्टका तूष्णीं निदधातीति । पर दयानन्देन नैनन्मृतपुरुषस्य, किन्तु जीवितस्यैव आशिशि विनियक्तम–"हे जीव ते वात श भवतु, घृणि (रश्मिवान् सूर्य ) श हि भवतु, वेद्या चिता इष्टका श भवन्तु, पार्थिवासोऽग्नयस्ते श भवन्तु, एते त्वा मा अभिशूशुचन्निति" ।

एव मंकैरुदाहरणैरस्माभिर्वेशद्य नीतोऽय विषयो यत् प्रचलितकर्मकाण्डपद्धतेर्भिन्नामेव दिशमाश्रित्य दयानन्दस्वामिना वेदव्याख्यानपद्धति प्रसृता । वेदमन्त्राणा परम्पराप्राप्ताना विनियोगाना च नित्य परमेश्वरकृत कश्चन सम्बन्ध, यस्मिन विधौ विनियोग प्राप्यते तदर्थमेव ब्रह्मणा मन्त्रा निर्मिता इति जनाना हृदि बद्धमूला विचारणा महर्षिप्रयत्नेन कथमपि विशृङ्खलीभूता, साम्प्रत चेतरेऽपि केचन भाष्यकारा वेदविचारकाश्च वेदार्थे तच्छैलीमनुसरन्तीति तत्प्रभाव सुतरा जागर्ति ।

## सूचना

सर्वपाठको को सूचित किया जाता है कि हमने यह व्यवस्था की है कि ग्राहको को देने के बाद बचे हुए वर्ष भर के १२ अको को एक जिल्द में बाँध दिया जाये । इस प्रकार की जिल्दें अधिक तो नहीं होगी फिर भी जो सज्जन लेने के इच्छुक हो वे डाक-व्यय सहित ५)रु० भेज कर प्राप्त कर सकते हैं । १६, १७, १८ वर्षों की जिल्दें प्राप्त हो सकती हैं । इसके अतिरिक्त जो सज्जन निम्न विशेषाक पृथक् रूप में लेना चाहें तो वे मनीआर्डर से निम्न धन भेज देवें—

| | | | | | |
|---|---|---|---|---|---|
| १ | विष्णु-अङ्क | १)७५, | २ | गुरुकुल-अङ्क | १)०० |
| ३ | वेदाङ्क | १)७५, | ४ | वेद-विमर्शाङ्क | १)७५ |

—सम्पादक

[ चेत्रनासाङ्कुतोऽग्ने-- ]

# अग्निसहस्रनामस्तोत्रम्

श्री साम्बदीक्षितः

कोलालपा वीतिहोत्रो घृतनिर्णिक् सनश्रुतः ।
शुचिवर्णस्तुविग्रीवो भारती शोचिषस्पति. ।।३४।।
सोमपृष्ठो हरिश्मश्रु र्भद्रशोचिर्जुगुर्वणिः ।
ऋत्विक् पूर्वेऽभिर्ऋषिभिरीड्यश्चित्रश्रवस्तमः ।।३५।।
भोमस्तियानां वृषभो नूतनैरीड्य आसुरः ।
स्तभूयमानोऽध्वराणां गोपा विश्पतिरस्मयुः ।।३६।।
ऋतस्य गोपा जीराश्वो जोहूत्रो दंपति. कविः ।
ऋतजातो द्युक्षवचा जुह्वास्योमीवचातनः ।।३७।।
सोमगोपाः शुक्रशोचिर्घृताहवन आयजि ।
असन्दितः सत्यधर्मा शशमानः शुशुक्वनिः ।।३८।।
वातजूतो विश्वरूपस्त्वष्टा चारुतमो महान् ।
इडा सरस्वतीहर्षन्तिस्रो दैव्यो मयोभुवः ।।३९।।
अर्वा सुपेशसौ दैव्यौ होतारौ स्वर्पति. सुभाः ।
देवीर्द्वारो जराबोधो हूयमानो विभावसुः ।।४०।।
सहसाजान्मर्मृजेन्यो हिस्रोऽमृतस्य रक्षिता ।
द्रविणोदा भ्राजमानो धृष्णुरूर्जां पति पिता ।।४१।।
सत्रा यविष्ठो वरुणो वरेण्यो भाजयुः पृथुः ।
वंद्योऽध्वराणां सम्राजन्सुशेवो धीऋषि. शिव. ।।४२।।
पृथुप्रगामा विश्वायुर्मीढ्वान् यन्ता शुचत्सखा ।
अनवद्यः पप्रथानस्तवमानो विभुःशयुः ।।४३।।
श्वैत्रेयः प्रथमो द्युक्षो बृहदुक्षा सुकृत्तरः ।
वयस्कृदग्निस्तोकस्य त्राता प्रीतो विदुष्टरः ।।४४।।
तिग्मानीको होत्रवाहो विगाहः स्वतवान्भृमिः ।
जुजुष्वाण. सप्तरश्मिर्ऋषिकृत्तुर्वणिः शुचिः ।।४५।।
भूरिजन्मा समनगाः प्रशस्तो विश्वतस्पृथुः ।
वाजस्य राजा श्रुत्यस्य राजा विश्वभरा वृषा ।।४६।।
सत्यताति र्जातवेदास्त्वाष्ट्रोऽमर्त्यो वसुश्रवाः ।
सत्यशुष्मो भाऋजीकोऽध्वरश्रीः सप्रथस्तम. ।।४७।।
पुरुरूपो बृहद्भानु विश्ववेदो मरुत्सखः ।
रुशदूर्मि र्जेहमानो भृगवान्वृत्रहाक्षमः ।।४८।।
वामस्य रातिः कृष्टीनां राजा रुद्रः शची वसु ।
दक्षः सुदक्ष इन्धानो विश्वकृष्टि बृहस्पति. ।। ४९।।

अपां सधस्थो वसुविद्रण्वो भुज्म विशांपतिः ।
सहस्रवल्शो धरुणो वह्निः शम्भुः सहन्तमः ।।५०।
अच्छिद्रोतिश्चित्रशोचिर्हृषीवानतिथिर्विशां ।
दुर्धरीतुः सपर्येण्यो वेविषच्चित्र आतनिः ।।५१।।
दैव्यः केतुस्तिग्महेतिः कनीनां जार आनवः ।
ऊर्जाहुतिर्ऋतश्चेत्यः प्रजानन्सर्पिरासुतिः ।।५२।।
गुहाचतञ्चित्रमहा द्रुन्नः सूरो नितोशनः ।
ऋत्वा चेतिष्ठ ऋतचित्त्रिवरूथः सहस्रजित् ।।५३।।
संवृग्जूर्णिः क्षोव आयुरुषर्भुद्वाजसातमः ।
नित्यः सूनुर्जन्य ऋतप्रजातो वृत्रहंतमः ।।५४।।
वर्षिष्ठः स्पृहयद्वर्णो घृणिर्जातो यशस्तमः ।
वनेषु जायुः पुत्रः सन्पिता शुक्रो दुरोणयु. ।।५५।।
आशुहेमः क्षयद्घोरो देवानः केतुरह्रयः ।
वुरोकशोचिः पलित सुवर्चा बहुलोद्भृतः ।।५६।।
राजा रयीणां निषत्तो धूर्षद्रुक्षो ध्रुवो हरिः ।
धर्मो द्विजन्मा सुतुकः शुशुक्वाञ्जार उक्षितः ।।५७।।
नाद्यः सिष्णुर्दधिः सिंह ऊर्ध्वशोचिरनानतः ।
शेवः पितॄनां स्वाध्याऽऽहावोऽप्सु सिंहइव श्रितः ।।५८।।
गर्भोवनानां चरथां गर्भो यज्ञः पुरूवसुः ।
क्षपावान्नृपतिर्मेध्यो विश्व. श्वेतोऽपरीवृतः ।।५९।।
स्थातां गर्भः शुक्रवर्चास्तस्थिवान्परमेपदे ।
विद्वान्मर्ताँश्च देवानां जन्मश्येतः शुचिव्रत ।।६०।।
ऋतप्रवीत. सुब्रह्मा सविता चित्तिरप्सुषद् ।
चंद्र. पुरस्तूर्णितमः स्पन्द्रो देवेषु जागृवि ।।६१।।
पुरएता सत्यतर ऋतावा देववाहनः ।
अतन्द्र इन्द्रः क्रतुविच्छोचिष्ठः शुचिदच्छितः ।।६२।।
हिरण्यकेशः सुप्रीतो वसूनां जनिताऽसुरः ।
ऋभ्वा सुशर्मा देवावीर्दधद्रत्नानि दाशुषे ।।६३।।
पूर्वो वधृग्दिवस्पायुः पोता धीरः सहस्रसाः ।
सुमृडीको देवकामो नवजातो धनञ्जयः ।।६४।।
शश्वत्तमो नीलपृष्ठ ऋभ्वो मन्द्रतरोऽप्रियः ।
स्वर्चिरंशो दारुरस्त्रिच्छितिपृष्ठो नभोवहन् ।।६५।।

पन्यांसस्तरुणः सम्राट् चर्षणीनां विचक्षणः ।
स्वंग. सुवीरः कृष्णाध्वा सुप्रतूर्तिरिडो महि ।।६६।।
यविष्ठ्यो वक्षुणवृको वाशीमानवनो घृतम् ।
ईवानस्ता विश्ववारश्चित्रभानुरपां नपात् ।।६७।।
नृचक्षा ऊर्जयञ्छोरः सहोजा अद्‌भुतक्रतु ।
बहूनामवमोऽभिद्युर्भानुर्मित्रमहो भग. ।।६८।।
वृश्चद्वनो रोरुचानः पृथिव्याः पतिराघृषः ।
दिवः सूनुर्दस्मवर्चा यन्तुरो दुष्टरो जयन् ।।६९।।
स्वर्विद्‌गणश्री रथिरो नाकः शुभ्नोत्पुरः सस ।
हिरिशिप्रो विश्वमिन्वो भृगूणां रातिरद्वयन् ।।७०।।
सुहोता सुरणः सुद्योमं धाता स्ववसः पुमान् ।
अश्ववावा श्रेष्ठशोचिर्यजोयान्हर्यतोऽर्णवः ।।७१।।
सुप्रतीकश्चित्रयामःस्वभिष्टिश्चक्षणी रुशन् ।
बृहत्सूरःपृष्टबधुःशचीवान्संयतश्चिकित् ।।७२।।
विशामीड्योऽहिरयमानो वयोधा गिर्वणास्तपुः ।
वशान्न उग्रोऽद्वयावी त्रिधातुस्तरणिः स्वयुः ।।७३।।
त्रययाय्यश्चर्षणीनां होता वीडुः प्रजापतिः ।
गुहमानो निर्मथितः सुदानुरिषितो यजन् ।।७४।।
मेधाकारो विप्रवीरः क्षितीनां वृषभोऽरतिः ।
वाजिन्तमः कण्वतमः जरिता मित्रियोऽजरः ।।७५।।
रायस्पतिः कृचिदर्थो कृष्णयामो विविक्षयः ।
घृतप्रतीकश्चेतिष्ठः पुरुक्षुः सत्वनोऽक्षितः ।।७६।।
नित्यहोता पूतदक्षः ककुद्मान् क्रव्यवाहनः ।
विधिषाय्यो विद्युतानः सुद्योत्मा दस्युहन्तमः ।।७७।।
पुरुवारः पुरुतमो जहूं षाणः पुरोहितः ।
शुचिजिह्वो जर्भुराणो रेजमानस्तनूनपात् ।।७८।।
आदितेयो देवतमो वीर्घतन्तुः पुरंदरः ।
विश्रियोनिर्दर्शतश्रीर्जरमाणः पुरुप्रियः ।।७९।।
जयसानः पुरुप्रैषो विश्वतूर्तिः पितुष्पिता ।
सहसानः सञ्चिकित्वान् देवोदासः सहोवृधः ।।८०।।
शोचिष्केशो धृषद्वर्णः सुजातः पुरुचेतनः ।
विश्वश्रुष्टिर्विश्ववार्यं प्रायजिष्ठः सदानवः ।।८१।।
नेता क्षितीनां दैवीनां विश्वादः पुरुशोभनः ।
यज्ञवन्युर्वहि्नतमो रंसुजिह्वो गुहाहितः ।।८२।।
त्रिषधस्थो विश्वधाया होत्राविद्विश्वदर्शतः ।
चित्रराधाः सूनृतावान् सद्योजातः परिष्कृतः ।।८३।।
चित्रक्षत्रो वृद्धशोचिर्वनिष्ठो ब्रह्मणस्पतिः ।
बभ्रिः परस्पा उषसामिधानः सासहिः सदृक् ।।८४।।
वाजी प्रशस्यो मधुपृक् चिकित्रः
नक्ष्यः सुदक्षोऽदृपितो वसिष्ठः ।
दिव्यो जुषाणो रघुयत् प्रयज्युः
दुर्यः सुराधाः प्रयतोऽप्रमृष्यः ।।८५।।
वातोपधूतो महिना दृशेन्यः
श्रीणामुदारो धरुणो रयीणां ।
दीदयद्गुरुक्वान्द्रविणस्युरत्यः
श्रियं वसानः प्रवपन्यजिष्ठः ।।८६।।
वस्यो विदानो दिविजः पनिष्ठो
दम्यः परिज्मा सुहवो विरूपः ।
जामिर्जनानां विचितो वपुष्यः
शुक्रेभिरंगैरज आततन्वान् ।।८७।।
अध्रग्वरूथ्यः सुदृशीकरूपो
ब्रह्मा विधिद्वाञ्चिकितुर्विभानुः ।
धर्णिर्विधर्ता विविचिः स्वनीको
यह्वः प्रकेतो वृषणश्चकानः ।।८८।।
जुष्टो मनोता प्रमतिर्विहायाः
जेन्यो हविष्कृत्पितुमाञ्छविष्ठः ।
मतिः सुपित्र्यः सहसो वृशानः
शुचिप्रतीको विषुणो मितद्रुः ।।८९।।
दविद्युतद्वाजपतिर्विजावा
विश्वस्य नाभिः सनज सुवृक्ति ।
तिग्मः सुदंसा हरितस्तमोहा
जंता जनानां ततुरिर्वनर्गुः ।।९०।।
प्रेष्ठो धनर्च. सुषखो धियंधिः
मन्युः पयस्वान्महिष समानः ।
सूर्यो घृणीवानध्वर्युधृं तश्री
भाता शिमीवान्भुवनस्य गर्भः ।।९१।।
सहस्ररेता नृषदप्रयुच्छन्
वेनो वपावानृत्सुषुमञ्छिशान. ।

मधुप्रतीकः स्वयशाः सहीयान्
नव्यो मुहुर्गीः सुभगो रभस्वान् ॥९२॥
यज्ञस्य केतुः सुमनस्यमानो
देवः श्रवस्यो वयुनानि विद्वान् ।
'दिवस्पृथिव्योररतिर्ह्विर्राट्
विष्णूरथः सुष्टुत ऋञ्जसानः ॥९३॥
विश्वस्य केतुश्च्यवनः सहस्यो
हिरण्यरूपः प्रमहाः सुजंभः ।
रुशद्वसानः कृपनीडऋंधन्
कुल्व्यो घृतान्नः पुरुधप्रतीकः ॥९४॥
सहस्रमुष्कः सुशमी त्रिमूर्धा
मन्द्रः सहस्वानिषयन्तरुद्रः ।
तृषुच्युतश्चन्द्ररथो भुरण्यु
र्धासिः सुवेदः समिधा समिद्धः ॥९५॥
हिरण्यवर्णः शमिता सुवन्नो
यज्ञस्य नेता सुधितः सुशोकः ।
कविप्रशस्तः प्रथमोऽमृतानां
सहस्रश्रृंगो रयिविद्रयीणां ॥९६॥

अब्नो हुविस्पृक् प्रविवो दिविस्पृ-
ग्विश्वा सुबन्धुः सुयजो जरद्विट् ।
अपाकचक्षा, मधुहस्त्य इद्धो
घर्मस्त्रिपस्त्यो द्रविणाः प्रतिव्यः ॥९७॥
पुरुष्टुतः कृष्णपविः सुशिप्रः
पिशंगरूपः पुरुनिष्ठ एकः ।
हिरण्यदन्तः सुमखः सुहव्यो
दस्मस्तपिष्ठः सुसमिद्ध इर्यः ॥९८॥
सुद्युत् सुयज्ञ सुमनाः सुरत्न
सुश्रीः सुससत् सुरथः सुसंदृक् ।
तन्वा सुजातो वसुभिः सुजातः
सुदृक् सुदेवः सुमर सुबर्हि ॥९९॥
ऊर्जोनपाद्वयिपतिः सुविदत्र आविः
अक्तोऽजिरो गृहपतिः पुरुवारपुष्टिः ।
विद्युद्रथः सुसनिता चतुरक्ष इष्टि-
र्दीद्यान इन्दुरुरुकृद् घृतकेश आशुः ॥१००॥

॥ इत्यग्निसहस्रनामस्तोत्रं संपूर्णम् ॥

## ॥ अंतिमा वाक् ॥

नाम्नां सहस्रजापेन प्रीतः श्रीहव्यवाहनः
चतुर्णां पुरुषार्थानां दाता भवतु मे प्रभुः ॥ १ ॥
नात्र नाम्नां पौनरुक्त्यं न चकारादिपूरणम्
श्लोकानां शतकेनेव सहस्रं प्रथितं मया ॥ २ ॥
श्लोकाश्चतुरशीतिस्यु रादितस्ता अनुष्टुभ
ततः पंचदशत्रिष्टुब्जिद्रवज्रोपजातिभिः ॥३ ॥
एकान्त्या शक्वरी सा हि वसन्ततिलका मता
सार्धैकादशकैः श्लोकैर्नाम्नामष्टोत्तरं शतम् ॥ ४ ॥

संगृहीतानि वेदाब्धेरग्नेरेव महीयसः
ॐकारमादौ नामानि चतुर्थ्यंतानि तत्ततः ॥ ५ ॥
नमोंन्तानि प्रयोज्यानि विनियोगे मनीषिभिः
वैविकत्वाच्च सर्वेषां नाम्नामन्ते प्रदर्शितम् ॥ ६ ॥
सौकर्याय हि सर्वेषां चतुर्थ्यंतं मुदे मया
नाम्नां विशेषज्ञानार्थं मंत्रांकश्च प्रदर्शितः ॥७॥

इति श्री गोकर्णाभिजनस्य दीक्षितदामोदरसूनोः सांबदीक्षितस्य कृतौ
अग्निसहस्रनामस्तोत्रं संपूर्णम् ॥

—०—

# वसन्ततिलकम् ( ऋतुश्रृङ्गारात् )

प्रो० श्री बुद्धदेव शर्मा एम.ए., वेदाचार्यः, संस्कृत विभागः, गुरुकुल कांगड़ी विश्वविद्यालय

॥ १ ॥

उष्णा यथा दिनमणे किरणाः कदुष्णा
आमोददो जगदसुर्जडतां जहाति ।
नीहारिकाजवनिकारहिताश्च तारा
उक्ता वसन्ततिलका प्रकृतिर्जगत्याः ॥

॥२॥

अनन्तवन्यान्तनितान्तकान्तां
दिशान्तवासन्तलतान्तवान्ताम् ।
अङ्गारकल्पां सुमशोणमालां
निशान्तवातो व्यजयत्यशान्तम् ॥

॥३॥

संध्यासकाशे कपिशांशुशेष
आकाशनीकाशविशेषवेषे ।
सितांशमेघांशुकमध्यपाशे
राकेशहीरांशुविकासशोभा ॥

॥४॥

प्रवासिचित्तक्षतजानुरक्त-
निस्त्रिंशपुत्री शितकिंशुकाग्रम् ।
भृङ्गाङ्गनाभिश्च वनप्रियाभिः
संक्रोदितं तत्प्रतिकारहेतोः ॥

॥५॥

नक्षत्रमालां ललितां च लाक्षां
वा पत्रपाश्यामथ तालपत्रम् ।
वाल्कं च भूम्यै प्रियमण्डनार्थं
प्रसाधनाय व्यदधन्निसर्गः ॥

॥६॥

शैलानतायां पुलिनामलायां
स्थिरास्थिराया जलचञ्चलायाम् ।
वा शीकरिण्यां रजतावदात-
ज्योत्स्नास्तरण्यां हृदयं सदास्ते ॥

॥७॥

पिकैश्चञ्चरीकैश्च सगुञ्जितेभ्यः
स्फुरन्मञ्जरीमञ्जुलोदञ्जलिभ्यः ।
सुमानीव कम्रद्रुमा नूतनवेषा
वसन्तागमानन्दनायाकिरन्ति ॥

॥८॥

मधुक्षीबवृक्षैः प्रवालातिरक्तै
समं पुष्पवत्यो व्रततयः प्रकृत्या ।
मुदामोदमत्ताः समारब्धलास्या
मनोजस्य मित्रं हि यूनाममित्रम् ॥

॥९॥

शिशिरतुहिनपाशैर्लोकसंतापकारी
निगडिततपनोऽयं मुच्यते शान्ततापः ।
शमयति परितापं सैव कालान्तरेण
सुखदकनककल्पैरुस्रवर्षैर्जगत्या. ॥

॥१०॥

उपवनपवनो यः शीतधाराजडोऽभूत्
किसलयकुलतुल्यैः स स्फुलिङ्गैः कवोष्णः ।
दिनमणिकिरणा वा सेव्यमाना दिनादौ
समयनियमचक्रं को विहातुं समर्थः ॥

।।११।

भ्रमरसरणिवाप्यां भूरितारानलिन्य
किमुत कुमुदबन्धुश्चारुराजीवराज ।
स च मिहर इवाहो कौमुदीतापवर्षो
दिवससदृशयामा दूरबन्धोर्हि यामा ।।

।।१२।।

गगनशिरसि रम्यं मेघमालोत्तरीय
दशदिगलकसीमाश्वेततारायथालिम् ।
अथ परिदधती वा वान्तनक्षत्रमाला
कसुमसमययामानूढकन्येव भाति ।।

।।१३।।

उडुप उडुप एतीवान्तरिक्षाब्धिदिक्षु
सुरसरिति वसन्ते पञ्चमीकान्ततभ्याम् ।
चरमशिखरिकूले वासरादौ स्थितोऽयं
कुसुमदलकचित्तो यस्य नित्यं हि यात्री ।।

।।१४।।

क्रमश इनरचोरर्तुप्रपञ्चैविरञ्चे–
र्दलककुसुमभूषामण्डनेभ्यो विहीना ।
निखिलवनलतालिर्लुण्ठितेवाभवद् या
पुनरपि ऋतुराजाभूषिता कोरकैव ।।

।।१५।।

पत्रैकवस्त्रं किरणैरदाहि
पुष्पैकभूषाम्बुकणैरवाहि ।
लतैकदेहस्तुहिनैरभञ्जि
प्राणो व्रतत्यं मधुना व्यदायि ।।

।।१६।।

पलाशपुष्पच्छविनारुणाशा–
प्राचीप्रतीचीद्विकपोलचक्रे ।
परागचूर्णाकुलगन्धवाहो
मनोजराज्यं तनुते वसन्ते ।।

।।१७।।

अनेकवर्णं जलयन्त्रधारा–
तीव्रप्रवाहैरचलाखिलेयम् ।
परोक्षमीनध्वजमित्रहस्त–
मुक्तं सुहोल्यामिव रञ्जिताङ्गी ।।

।।१८।।

तारापथभ्रष्टमिव प्रदोषे
पयोधराय शकलं कुरूपम् ।
चित्रं तदेवोषसि जातरूपं
सत्सङ्गरागः कलुषं हिनस्ति ।।

।।१९।।

सौदामिनीखड्गसुताप्रहार–
च्छिन्नान्तरिक्षे सुरभौ प्लवन्ती ।
अनेकवर्णै किरणैर्विभाति
कादम्बिनीजीर्णपटच्चरीव ।।

।।२०।।

परिहितनववेषाणां मञ्जरीमञ्जुलानां
नवतरुणतरूणां कर्णपर्णेषु वर्णान् ।
बकुलरजनिगन्धासान्द्रगन्धि सुमन्द
दिशि दिशि वमतीवानारतं गन्धवाहः ।।

।।२१।।

सोऽयं सपुष्पो न पलाशराशि–
र्विरञ्चपाणिज्वलितेन्धनाग्निः ।
नोपत्यकान्तः पृथुयज्ञकुण्ड
मेघो न धूमो दिशि तत्प्रकाश ।।

।।२२।।

वेलान्तनीला न तमालमाला
धराभिरामास्तरणी प्रभातं ।
नोष. प्रकाशो दलकोत्थराशि–
र्नार्कोदयः कोकनदोद्विकासः ।।

॥२३॥

लोकेशलोकारचनान्तकाला-
वशिष्टवर्णे फलके यथाभ्रे ।
प्राचीप्रतीच्योर्हि महाजनाना-
मारम्भशेषस्त्यजतीव चित्रम् ॥

॥२४॥

प्रसूनैरसंख्यैर्नतैः पञ्चशाखैः
समीरेरिताङ्गी सुकम्प्रैर्लसन्ती ।
मधुमत्तभृङ्गान् वसन्ते वसन्ती
ध्रुवं माधवी याचते प्रीतिगीतिम् ॥

॥२५॥

प्रसन्ने पयोदर्पणे स्वप्रसूनैः
सुरम्येण रूपेण संजातदर्पम् ।
पलाशं सरोजानि नृत्यन्तमेनं
प्रभाते हसन्तीव वाप्यां समीक्ष्य ॥

॥२६॥

पुष्पेषु पुष्पेषु सुहृद्विलासो
वातेषु वा तेषु परागरागः
स्वर्णोरुधारासु दिनेषु लोकयः
दिनं नवीनं किमपीव भाति ॥

॥२७॥

नेदं सरो भूपतितं द्युभित्तं
नो पद्मिनीयं रजनीशमूर्तिः ।
अशोकपुष्पार्चिता न भूमि-
र्ज्योत्स्न्यां वसन्ते त्रिदशस्थलीयम् ॥

॥२८॥

वसन्तरागः कलिकाप्रवालै-
र्वनप्रियाभिश्च विहङ्गभृङ्गैः ।
अहो दिनान्ते दिशि वा निशान्ते
दूरं धरायास्तरुणारुणाशा ॥

॥२९॥

वनप्रियारागमयूरनृत्य–
कादम्बिनीकीचकवाद्यधन्या
रंगस्थलीय नहि मृम्मयीला ·
यस्या वसन्तः किल सूत्रधारः ॥

॥३०॥

द्रवीभूतचन्द्रो बहुलक्षपौघे
यथा प्रसन्ने गगनाम्बुराशौ ।
कीर्णं स तारानलिनीः स्वरूपं
पुनः शनैः संश्चिनुते सयत्नम् ॥

॥३१॥

प्रवासिनेत्रेषु सदा वसन्ते
कथं कथं दुर्दिनमेतदास्ते ।
क्व पुष्पवर्षा क्व च वाष्पवृष्टि-
रहो विरञ्चेर्हि विचित्रसृष्टिः ॥

॥३२॥

सूर्यः सुमेरोस्तपनीयराशिं
सचित्य सम्यक् स्वकरैः सहस्रैः ।
उदारभावात् किरतीव भूम्यै
दाता जगत्यां हि सहस्रहस्तः ॥

॥३३॥

ज्योत्स्ना नहीन्दो रजतावदाता
पृथ्वी पृथिव्यां दहनस्वभावा ।
प्रवासिजीवं दहतीव लोके
पातीव छाया बहुलक्षपायाः ॥

॥३४॥

विशालं विशालं समुल्लङ्घ्य शैलं
सुमन्दं सुमन्दं वसन्ते वसन्ते
समीरप्रयातं स्वजाड्यं विहाय
यथा मेघदूतं समानेतुमुत्कम् ॥

# देवतास्तोत्रम्

( देवतानामाध्यात्मिकस्वरूपव्यापारनिरूपकम् )

स्तोत्रकार : श्री जगन्नाथो वेदालङ्कारः, अरविन्दाश्रमः पाण्डिचेरी

( १ )

ओम् तत् सदेकं परमात्मतत्त्वं
सच्चित्सुखं **ब्रह्म** परात्पराख्यम् ।
देवाधिदेवं तमनाद्यनन्तं
नमामि सर्ग-स्थिति-संहृतीशम् ।।

( २ )

अनन्तचित् तस्य परस्य पुंसो
या शक्तिराद्या च परा प्रसिद्धा ।
ता नौमि देवी**मदितिं** त्रिलोक्या
अम्बा विधात्रीं परिपालयित्रीम् ।।

( ३ )

विश्वस्य सा धारणचालनार्थं
शक्ती प्रसूते परमेशगर्भात् ।
ता एव देवा अपि चादितेयाः
संकीर्तिताः सन्त्यदितेः सुतत्वात् ।।

( ४ )

एवञ्च देवाः परमेश्वरस्य
ज्योतिःकला अंशविभूतयो वा ।
ते शक्तयस्तस्य च सार्वभौम-
व्यक्तित्वयुक्ता ननु मूर्तिमत्यः ।।

( ५ )

व्यक्तेश्च विश्वस्य विकासहेतो-
स्ते कुर्वते स्वीयविशेषकार्यम् ।
तेषां स्वरूपं भुवने विशिष्टं
व्यापारजातञ्च निरूप्यतेऽत्र ।।

( ६ )

पूर्वं **त्रिमूर्तिः** परिकीर्तनीया
याऽऽधारभूता क्रमिकोन्नतेर्नः ।
तौ **ब्रह्मणस्पत्युरुगायविष्णू**
**रुद्रश्च** वेदे प्रथितास्त्रिदेवाः ।।

( ७ )

१ब्रह्मात्मनोऽन्तस्तलनिर्गता वाग्
छन्दोमयी सैव च सृष्टिकर्त्री ।
तस्या पतिश्चाखिललोककृत्य
स ब्रह्मणस्पत्यभिधो हि देव ।।

( ८ )

विश्वं निगूढं तमसाऽप्ययेऽसौ
निश्चेतनागाधसमुद्रमग्नम् ।
आहूय वाचा समभिव्यनक्ति
सुगुह्यसत्यात्मकशक्तिमय्या ।।

( ९ )

स मानवस्यापि च हृद्गुहाभ्यः
सम्प्रेरयन् त्सर्जनकारिवाचम् ।
ज्योतिः सुगुप्तं तदचित्प्रदेशे
प्रकाश्य दिव्यां कुरुतेऽत्र सृष्टिम् ।।

( १० )

**रुद्रस्तु** रौद्रः सदयश्च देवः
स शङ्करश्च प्रलयङ्करश्च ।

---

१आत्मनोऽन्तस्तलोद्भूता वाग् ब्रह्म सैव सृष्टिकृत् ।
पतिस्तस्याश्च यो देवः प्रोक्तोऽसौ ब्रह्मणस्पतिः ।।

विश्वं बलादुन्नयते विचूर्ण्य
स विघ्नबाधा निजशस्त्रशक्त्या ।।

( ११ )

**विष्णुर्जगद्व्यापिगतिः** स लोकान्
पदैस्त्रिभिर्निर्मितवान् समस्तान् ।
दधाति तान् पोषति चापि पाति
ह्यधिष्ठितोऽसौ परमं पदं स्वम् ।।

( १२ )

पश्यन्ति यत् सूरिवराः सदैव
दिवीव चक्षुर्विततं सुदिव्यम् ।
यज्ज्योतिरानन्दमयं च धाम
यज्ञस्य लक्ष्यं खलु वैदिकस्य ।।

( १३ )

यज्ञे य ईड्यः प्रथमं हि **सोऽग्निः**
सङ्कल्पशक्तिः परमेश्वरस्य ।
स एव देवो 'भुवनं प्रविष्टो
रूपं च रूपं प्रतिरूप' आस्ते ।।

( १४ )

**आवाहनीयः** समभीप्सनीयः
स दीपनीयो हृदयस्य वेदौ ।
**तस्मिन् प्रबुद्धे** समुदेति चित्ता-
काशेऽस्मदीये नवचित्प्रभातम् ।।

( १५ )

**तदस्त्युषा दैव्यमृता** प्रचेता
वेदे स्तुताऽलौकिककाव्यवाचा ।
**पुनः पुनश्चेयमुदीयमाना**
**स्थिरा सुदीप्ता चिति जायते नः** ।।

( १६ )

तदा समारोहति नोऽन्तरग्नि-
र्भुवो दिवं तन्निधिमाप्तुकामः ।
दिवस्पतिं दिव्यमनोऽधिपश्च
तं ज्योतिर**षेन्द्र** कुरुते कृतार्थम् ।।

( १७ )

अत्रावरोहत्यपि सोऽस्मभूमि
ह्यस्माकमन्यैः सहचारिदेवैः ।
तच्छक्तयो दिव्यविचाररूपाः
वेदेषु देवा **मरुतः** प्रसिद्धाः ।।

( १८ )

दिव्यप्रकाशस्य विभाश्च तस्य
या **विद्युतस्ता** विदिता ऋषीणाम् ।
**पर्जन्यरूपः** स च जीवनस्य
दिव्यस्य धारा भुवि वर्षतीह ।।

( १९ )

अथास्य देवासुरयुद्धरङ्गे
गणा सहाया **ऋभवः** सुभव्याः ।
तदर्थमेतेऽमरशिल्पिदेवाः
शस्त्रास्त्रजातं रचयन्ति दिव्यम् ।

( २० )

एभिः स देवैरवतीर्य वृत्रं
निहत्य तं भासयतीह **सूर्यम्** ।
सत्यस्य यो ह्यस्त्यधिपः सुदिव्य-
ज्योतिष्प्रदाताऽपि च सृष्टिकर्ता ।।

( २१ )

भर्गो वरेण्यं सवितुश्च यस्य
गायत्रमन्त्रेण धिये सुगीतम् ।
ध्यातः स नो यच्छति पूर्णसत्यं
ज्योतिः परं च स्पृहणीयरूपम् ।।

( २२ )

सूर्यस्य **मित्रावरुणार्यमाणः**
**भगश्च** पूषाऽपि च शक्तयोऽत्र ।
सर्वाश्च ताः पूर्णतया विकास्या-
स्तस्यास्ति सत्यं परमीप्सितञ्चेत् ।।

( २३ )

**तत्रार्यमा**ऽर्यत्वविबोधिशक्ति-
र्या सत्यसङ्ग्रामसहायिका न. ।
पूर्णत्वसिद्धि प्रति नश्च यात्रा-
सञ्चालकोऽसौ पुरुषार्थमूर्तिः ।।

( २४ )

वैशाल्यपावित्र्यमयश्च देवः
स्वराट् **च** सम्राड् **वरुणः** प्रसिद्धः ।
स पाशहस्तोऽपि च पाशहर्त्ता
मूर्त्ता विभोर्ज्ञानबलक्रिया च ।।

( २५ )

प्रेमाधिपो दिव्यसखः स **मित्रः**
सृष्टिं सुसंवादमयीं विधत्ते ।
समग्रबोधञ्च मनःप्रसादं
सामस्वरो यच्छति सौम्यताञ्च ।।

( २६ )

सत्यप्रकाशस्य सुपोषणार्थं
**सूर्यः** स्वतोऽसौ भवतीह **पूषा** ।
स्वस्यानया पोषति दिव्यशक्त्या
देवत्वमस्मास्वधिकाधिकं स ।।

( २७ )

ज्योतिश्च-सत्यस्य विवर्द्धमानं
कल्पेत साक्षात्कृतयेऽस्य नूनम् ।
**तेनाथ** चानन्दरसोऽधिगम्यो
गुह्योऽमृतत्वस्य निधिश्च लभ्यः ।।

( २८ )

**सोमस्तयोश्चास्त्यधिपः प्रसिद्धो**
न यद्रसोऽतप्ततनोरवाप्यः ।
प्राप्तश्च नासौ च्यवता हि नोऽङ्गाद्
इत्येव पक्व कलशोऽस्त्यभीष्टः ।।

( २९ )

प्राणस्य चित्तस्य तनोश्च पूर्णं
स्वास्थ्यञ्च सौख्यं समपेक्षितं नः ।
**तदश्विनौ** देवभिषग्वरौ नो
दत्तोऽधिनाथौ निखिलेन्द्रियाणाम् ।।

( ३० )

सिद्धे च देहे हि तयोः प्रसादात्
सन्धार्य आनन्दसुधारसाब्धिः ।
तस्योपभोक्ता च भगः स देवः
सिद्धस्य भुक्तेः सुविधायको यः ।।

( ३१ )

पदार्थमात्रस्य यथोचितोप-
भोगस्य सामर्थ्यमसौ ददाति ।
शक्तिं प्रदत्तेऽपि च दिव्यभुक्ते
स पापतापादिकभीतिमुक्ताम् ।।

( ३२ )

या देवता ऊर्ध्वमुदीरितास्ताः
पुंशक्तयस्तस्य परात्परस्य ।
**स्त्रीशक्तयः** सम्प्रति कीर्तनीयाः
वेदादिषु ग्ना इति संज्ञिता याः ।।

( ३३ )

तास्वादिमा **देव्यदितिः** प्रसिद्धा
चिच्छक्तिराद्या परमस्य पुंसः ।

सा देवमाता भुवनाम्बिका च
पुत्रै विधत्ते जगतां व्यवस्थाम् ।।

( ३४ )

**इडा मही** चापि **सरस्वती** च
सा **दक्षिणाऽथो सरमे**ति देव्यः ।
ताः शक्तयः सन्ति ऋतस्य पञ्च
कुर्वन्ति तास्ता ऋतचित्क्रियाश्च ।।

( ३५ )

आसां **मही** वाग् बृहती, व्यनक्ति
दिव्योद्गमाद् या ननु वस्तुमात्रम् ।
**इडा** च वाक् शक्तिमती ऋतस्य
तद्दर्शनं नः प्रददाति याऽऽद्या ।।

( ३६ )

धारा च तस्य प्रवहन्त्यजस्र
**सरस्वती**ति प्रथिताऽस्ति नाम्ना ।
सत्यस्य साऽन्तःस्फुरिता हि वाणी
या श्रूयतेऽन्तर्ऋषिभिः समाधौ ।।

( ३७ )

मयोभुवस्तिस्र इमाश्च देव्यः
सीदन्तु नित्यं हृदयासने नः ।
देवी चतुर्थी **सरमा**भिधाना
सुविश्रुता देवशुनीति नाम्ना ।।

( ३८ )

सत्यस्य शक्तिः सहजावबोध-
दृष्टिश्च चिद्रश्मिगवेषिणी सा ।
ईशा च तत्त्वस्य विमार्गणेऽसौ
तन्मार्गमुद्दीपयति प्रभाभिः ।।

( ३९ )

इन्द्रस्य चिद्गाः पणिचोरिताः सा
तमोगुहान्तश्च वलस्य गुप्ताः ।
अन्विष्य तत्प्राप्तिपथं निवेद्य
ज्योतिर्धनं लम्भयते हि तस्मै ।।

( ४० )

सत्यानृते चापि तमः प्रकाशौ
ऋजु च जिह्मञ्च तथा विवेक्तुम् ।
देवी सुदक्षाऽऽन्तरबोधशक्त्या
विवेचिनी चित्किल **दक्षिणे**ति ।।

( ४१ )

प्रत्येकदेवस्य निजा च शक्तिः
स्त्रीदेवतोक्ताऽपि च तस्य पत्नी
पत्येव तेन प्रविचोदितेह
तत्कार्यनिर्वाहमसौ करोति ।।

( ४२ )

तदेवमाध्यात्मिकरूपकार्य-
व्यापारजातं खलु देवतानाम् ।
अस्मासु चासा क्रमिको विकासः
प्रोक्तः समासेन यथाप्रसङ्गम् ।।

( ४३ )

समग्रदेवत्वमभीप्सवश्चेद्
वयं पदाब्जे अदितेर्भजेम ।
अनागसः स्याम सदा च तस्याः
सुदिव्यतायाः पुरतो जनन्याः ।।

( ४४ )

अनन्तचैतन्यमयीं च दैवीं
नावं तदीयां शमदां श्रयेम ।
नीताश्च तस्यां वरुणादिदेवै-
विन्देम निःश्रेयसधाम दिव्यम् ।।

——:o:——

# वेदमूलाः कथाः

( श्री विनोदचन्द्रो विद्यालंकार, एम.ए., गुरुकुल कांगड़ी )

वेदेष्वनेकत्र कथात्मकशैल्या विषयाणां प्रतिपादनं विलोक्यते। वर्णनानि कानिचिद् एतादृश्यपि सन्ति, यानि वेदानां कविना स्वतः कथारूपेण न प्रस्तुतानि, परं तान्याश्रित्य नेकाः कथा रचयितुं शक्यन्ते। वेदानामेतादृशानि वर्णनान्यधिकृत्यैव महाभारतपुराणबृहद्देवताप्रभृतिषु ग्रन्थेषु बहवः कथाः रचिताः। ता पठन्तो वयमेतत्र विचारयामो यद् वस्तुत इमा कथा वेदानां कांश्चित् प्रसङ्गान् स्पष्टीकुर्वन्ति। एतादृशीनामेव कासाचित् कथानां मूलं वेदेषु पश्यामः।

### दधीचेरस्थभिर्वृत्रस्य वधः

महाभारते भागवतपुराणे च कथैका वर्तते यस्यां दधीचेरस्थभिर्वृत्रवधस्य वर्णनं विद्यते। इत्थमस्ति कथायाः सारः—वृत्रनामधेयस्य कस्यचिद् दैत्याधिपतेरुपद्रवेण त्रिलोकीवास्तव्याः सर्वेऽपि पीडिता अभूवन्। देवा अपि तद्भयेन कष्टापन्ना आसन्। तद्वधार्थमनेके उपायाः समाचरिताः, परं तथापि स मृत्युं नाप। ततस्तु इन्द्रसहिताः सर्वे सुरा ब्रह्मणः समीपं जग्मुः। स उवाच यद् दधीचिनामधेयस्य तपस्विनः शरीरस्यास्थभिर्वृत्रो हन्तुं शक्यते। तच्छ्रुत्वा देवैस्तस्य महर्षेः कीकसैः वज्रं निरमायि, तेनैव च पुरुहूतो वृत्रं जघान।

इयं कथा वेदमूलैव। ऋग्वेदे दधीचोऽस्थभिर्नवनवतिवृत्राणां वधस्योल्लेखः इत्थं कृतः—

"इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः।
जघान नवतीर्नव" ॥ ऋग्० १.८४.१३

मन्त्रस्यार्थः स्पष्ट एव—'अप्रतिभटः इन्द्रः महर्षेः दधीचोऽस्थभिर्नवनवतिसंख्यकान् वृत्रान् व्यापादयामास' इति।

सर्वतः पूर्वमस्माभिरेतज्ज्ञातव्यं यन्मन्त्रेऽस्मिन् कुत्रापि न लिखितं यद् मृत्युं गतस्य दधीचोऽस्थभिर्वृत्रस्य वधः संजातः। एतत्तु कथाकर्तॄणां कल्पनाकलनमेव। मन्त्रस्य दध्यङ् तु प्राणवान् शूरोऽस्ति। यदि निर्जीवानाम् अस्थ्नाम् आवश्यकताऽभविष्यत् तर्हि यस्य कस्यापि प्राणिनोऽस्थभिर्वज्रं निर्मातुमशक्ष्यत। अस्थीनि सर्वाणि समान्येव। यदि कश्चिद् ब्रूयाद् यत् तस्य महर्षेरस्थीनि सुदृढानि आसन्, तदापि ततः सुदृढतराण्यस्थीनि अपरेषां प्राणिनामपि भवितुमर्हन्ति। अस्थि च विहाय लोहप्रभृतिद्रव्यैरपि वज्रं निर्मातुं पार्यते। अतः स्पष्टमेव यन्न खलु मृतस्य किन्तु जीवितस्यैव दधीचोऽस्थभिर्वृत्रस्य मृत्युर्जातः। इन्द्रश्च नृपोऽस्ति।

अधिदैवतदृष्ट्या इन्द्र ईश्वरः, दध्यङ् सूर्यः, तस्यास्थीनि च किरणाः सन्ति। नवनवतिवृत्रा मेघानामनेके खण्डा विद्यन्ते। अथर्ववेदे रोगकृमयो वृत्रनाम्ना स्मृताः। अतः अभिप्रायोऽयं फलितो यत् ईश्वरः सूर्यस्य किरणैः मेघसमूहान् रोगकृमीन् वा विनाशयति।

### देवापि-शन्तनु-कथा

निरुक्ते एका कथा लभ्यते यद् देवापिः शन्तनुश्च द्वौ कुरुवंशीयौ भ्रातरौ आस्ताम्। तयोः शन्तनुः कनीयानपि स्वात्मानं राज्येऽभिषिषेच। तदवलोक्य देवापिः तपस्तप्तुं वनं जगाम। शन्तनुना ज्येष्ठभ्रातुरधिकारग्रहणेन अधर्मः कृतः, अतः द्वादशवर्षाणि तस्य राज्ये पर्जन्यो न ववर्ष। बुभुक्षिताः प्रजाः मृत्युमुखे पतितुमारब्धाः। ततः स चिन्ताग्रस्तोऽभूत्। स ब्राह्मणैरुक्तो यदधर्मस्त्वयाऽऽचरितः, तस्माद् वृष्टेरभावः। ततोऽसौ

देवापि निवेदयामास--राज्यं गृहाणेति । देवापि प्रत्युवाच नेदानीमहं राज्यं जिघृक्षुरस्मि । त्वं वृष्टियज्ञं कुरु, पुरोहितस्ते भवामि । तथैवाभूद्, राज्ये च वृष्टिर्जाता ।

अस्याः कथाया अपि मूलमस्ति वेदे । ऋग्वेदे वृष्टियज्ञः इत्थं वर्णितः--

"यद्देवापिः शन्तनवे पुरोहितो,
होत्राय वृतः कृपयन्नदीधेत् ।
देवश्रुतं वृष्टिवनि रराणो
बृहस्पतिर्वाचमस्मा अयच्छत् ।।"

ऋग् १०.९८.७

राजा शन्तनुः यज्ञाय देवापिं पुरोहितत्वेन स्वीकरोति । स देवापिः 'राज्ये वृष्टिः स्यात्' इति मनसि चिन्तयति, यज्ञं च विदधाति । तस्य मन्त्रोच्चारणे सभावितां त्रुटिं निवारयितुं बृहस्पति-र्नाम ब्रह्मा उपस्थितो भवति ।

वेदे शन्तनुर्देवापिश्च कस्यचिद् नृपविशेषस्य नाम्नी न स्तः, परम् उभाविमौ शब्दौ गुणानामेव सूचकौ । यास्केन शन्तनुशब्दस्यार्थः कृतः--"शन्तनुः शंतनोऽस्त्विति वा, शमस्मै तन्वा अस्त्विति वा" । शब्दोऽयं 'शम्' 'तनु' इति युगलस्य संयोगेन सिध्यति । प्रजाजनेभ्यः तनुसुखं, स्वास्थ्यं, प्रसन्नतां सुखं च इच्छन् नृपः 'शन्तनुः' इत्युच्यते । यदि कदाचिद् दुर्दैवयोगेन तस्य राज्येऽनावृष्टिर्भवेत् तदा स देवापिगुणयुक्तं पुरुष-मेव पुरोहितरूपेण स्वीकृत्य यज्ञं कुर्यादिति सूच्यते । 'देवानाप्नोतीति देवापिः' यो देवं परमेश्वरं दिव्य-गुणान् वा प्राप्नोति स विद्वान् देवापिरुच्यते । देवशब्दः पर्जन्यवाचकोऽप्यस्ति । यो देवं पर्जन्यं प्राप्तुं शक्नोति, अर्थात् पर्जन्यं वृष्ट्या भूमौ आनेतुमर्हति स निपुणो जनोऽपि देवापिः इत्युच्यते ।

## विष्णोः पदत्रयस्य कथा

भागवतपुराणे कथा वर्तते यत् प्राक्तनकाले बलिनामा कश्चित् पुण्यकर्मा दैत्यः इन्द्रपदमभि-लषन् यज्ञं कर्तुमारेभे । इन्द्रः स्वपदलोपभयाद् विष्णोः शरणं गतः । विष्णुरिन्द्रस्य समस्यां श्रुत्वा तां समाधातुं वामनरूपं धृत्वा बलिं प्राप । बलिना स पृष्टः, किमिच्छसि ? विष्णुरुवाच केवलं पदत्रयं भूमिमिच्छामि । बलेः स्वीकृतिं प्राप्य वामनरूपधारी विष्णुःप्रथमं पदं भूमौ द्वितीयमाकाशे तृतीयञ्च बलेर्मूर्ध्नि निदधे ।

एषाऽपि कथा वेदमूलैव । तत्सङ्केत ऋग्वेदे ऽस्मिन् मन्त्रे लभ्यते--

"प्र विष्णवे शूषमेतु मन्म
गिरिक्षिते उरुगायाय वृष्णे ।
य इदं दीर्घं प्रयतं सधस्थ
मेको विममे त्रिभिरित् पदेभिः ।।"

ऋग् १.१५४.३

अभिप्रायोऽयमस्ति यद् विष्णुः आत्मनः त्रिभिः पदैः इमं सुदीर्घं सुविस्तीर्णं लोकं विममे । यजुर्वेदेऽपि लिखितम्--

"इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ।
समूढमस्य पांसुरे स्वाहा ।।" यजुः ५ १५

वस्तुतो वेदः 'वेवेष्टि व्याप्नोति चराचरं जगत् इति विष्णुः' इति व्युत्पत्तिलभ्येन विष्णुपदेन परमात्मनः सर्वव्यापकतां सूचयति । एतदर्थमेव मन्त्रेषु 'स पदत्रयेण त्रिभुवनं विममे' इति वर्णनं विधाय पृथिव्यन्तरिक्षद्युरूपेषु त्रिष्वपि लोकेषु परमात्मनः सर्वव्यापकतायाः काव्यमयं वर्णनं विहितम् ।

## पर्वतानां पक्षकर्तनस्य कथा

पुराणेषु कथा विद्यते यत् पुरा पर्वतानां पक्षा अभवन् । ते नभसि उड्डीय यत्र कुत्रापि पतन्ति

स्म, येव अपरिमितो विनाशः संजायते स्म। इन्द्रस्तेषां पक्षान् अकृन्तत् ततः प्रभृति पर्वताः स्थिरा अजायन्त। मैनाकः इन्द्रभयात् समुद्रे निलीनः। अस्याः कथाया मूलं वेदे इत्यमस्ति—

"यः पृथिवीम् व्यथमानाम् अदृंहद्,
यः पर्वतान् प्रकुपितान् अरम्णात्।
यो अन्तरिक्षं विममे वरीयो
यो द्यामस्तम्नात् स जनास इन्द्रः॥"
ऋग् २.१२.२

मन्त्रेऽस्मिन् वर्णितं यदिन्द्रः प्रकुपितान् पर्वतान् स्थिरीकृतवान्। वेदे पर्वतशब्दः गिरिवाचको मेघवाचकश्चाप्यस्ति। प्रकुपिता मेघा इतस्ततो भ्रमन्त्येव। इन्द्रस्तेषां पक्षान् कर्तयित्वा अधस्ताद् भूमौ प्रक्षिपति। 'प्रकुपिताः पर्वताः' इत्यस्यार्थो 'ज्वालामुखपर्वताः' इत्यपि भवितुमर्हति। प्रारम्भकाले यदा शनैः शनैः पृथिवी वायव्यावस्थायाः द्रवावस्थां, द्रवावस्थायाश्च घनावस्थां प्राप्ता, तदा तत्रानेके ज्वालामुखपर्वता आसन्। यतोहि पृथिव्या उपरितपृष्ठं तु, दुग्धस्योपरि सन्तानिकेव, शीतं भूत्वा घनतां प्राप्तम्, परमभ्यन्तरे क्वथमानो द्रव आसीत्। स पृथिव्याः पृष्ठं विदार्य उपर्यागच्छति स्म, तदेवालङ्कारिकभाषया कथ्यते यत् पर्वता उड्डीयन्ते स्म। शनैः शनैः पृथिव्याः आभ्यन्तरभागोऽपि शीतलतां प्राप्तः, ततश्च तेषां ज्वालामुखानां पक्षच्छेदो जातः।

## शुनः शेप-कथा

ऐतरेयब्राह्मणे कथा समायाति यद् हरिश्चन्द्रो नाम कश्चन नृपः आसीत्। तस्य कोऽपि तनयो नाभवत्। तेन वरुणः स्तुतः, उक्तञ्च यदि मम पुत्रोत्पत्तिर्भविष्यति, तर्हि तं पुत्रं तुभ्यं बलीकरिष्यामि। वरुणस्य कृपया पुत्रो जज्ञे, यस्य नाम रोहित इति कृतः। यदा वरुणो बलिं याचितवान्, तदा नृपो व्याजमकरोद् यदस्य दशनाः प्रादुर्भवन्तु, अयं शैशवमतिक्रम्य कुमारो भवतु इत्यादि। कौमारं प्राप्य पितुः स्वतन्त्रो भूत्वायं वनं जगाम। प्रकुपितेन वरुणेन राजा जलोदररोगेण पीडितः। तदा रोहितो वनादजीगर्तऋषेः सकाशाद् गवां शतेन तत्तनयं शुनः शेपमक्रैषीत्। रोहितस्य स्थाने तत्पिता तं शुनःशेपं बलीकर्तुं यज्ञस्तम्भस्योपरि मध्येऽधस्ताच्च स्थानत्रयेऽभान्त्सीत्। स च स्वमुक्त्यर्थं वरुणप्रभृतीन् देवानस्तौत्। कथैषा ऋग्वेदमाधारीकृत्य रचितास्ति।

"शुनः शेपो ह्यह्वद् गृभीतस्
त्रिष्वादित्यं द्रुपदेषु बद्धः।
अवैनं राजा वरुणः ससृज्याद्
विद्वां अदब्धो विमुमोक्तु पाशान्॥"
ऋग् १.२४ १३

स्तम्भस्य त्रिषु स्थानेषु बद्धः शुनःशेपः अदितेः पुत्रं वरुणमाह्वयति, स विद्वान् वरुणो राजा अस्य पाशान् अवसृजेदित्यर्थः।

वस्तुतस्तु शुनः शेपो मनुष्यस्यात्मा वर्तते। 'श्वा' इत्यस्यार्थो भवति 'गमनशीलः' शेपश्च स्वरूपवाचकः। शुनो गतिशीलस्य कर्मरतस्य शेपः स्वरूपमिव शेपः स्वरूपं यस्य स शुनःशेपः। एवं गमनशीलः उन्नतिशीलस्वरूपयुक्तो वा स आत्मा शरीररूपे यज्ञस्तम्भे सात्त्विकराजसतामसाख्येन कर्मबन्धनत्रयेण बद्धोऽस्ति। मुक्तिमिच्छन् स प्रार्थयते यद् बन्धनत्रयान्मां वरुणो मोचयतु इति।

## राज्ञः सुदासो युद्धस्य कथा

तृत्सूनां राज्ञः सुदासो दशसंख्याकैः अरिनृपैः सार्द्धं जायमानस्य युद्धस्य ऐतिहासिककथायाः मूलमपि ऋग्वेदे विद्यते। सप्तममण्डलस्य

८३ तम सूक्ते तस्य विजयानन्तरं विजयकारण-भूतौ इन्द्रावरुणौ देवौ प्रति कृतज्ञता ज्ञापिता। तत्रोक्तं यत् रिपवो राजानः हस्तयोः परशुं गृहीत्वा सुदासः सकलभूमिजयाशया युद्धाय बद्ध-परिकरा आसन्। भूमिर्विध्वस्तेव दृष्टिपथमायाति स्म। आकाशे घोषोऽभवत्। शत्रवो निकटस्था एव आसन्, सुदाश्च दशभी राजभिः परिवृत्तोऽतिष्ठत्। एतादृश्यामवस्थायां इन्द्रावरुणौ सुदासमरक्षताम्।

सं भूम्या अन्ता ध्वसिरा अदृक्षत
इन्द्रावरुणा दिवि घोष आरुहत्।
अस्थुर्जनानामुप मामरातयो-
ऽर्वागवसा हवनश्रुता गतम्॥

ऋग् ७.८३.३

दाशराज्ञे परियत्ताय विश्वतः
सुदास इन्द्रावरुणावशिक्षतम्।
श्वित्यञ्चो यत्र नमसा कपर्दिनो
धिया धीवन्तो असपन्त तृत्सवः

ऋग् ७.८३.८

निरुक्ते सुदासशब्दस्यार्थः प्रत्यपादि-'सुदाः कल्याणदानः' इति। एतादृशेनैव भवितव्यम् आदर्शनृपेण। तृत्सवः सन्ति तस्य सैनिकाः। 'तृत्सुः' इत्यस्यार्थो भवति-संहारक, शत्रूणां संहारे समर्थः। (तृद् हिंसानादरयोः)।

इन्द्रावरुणयोः स्वरूपं वर्णयन् वेदः कथयति-

"वृत्राणि अन्यः समिथेषु जिघ्नते,
व्रतानि अन्यो अभिरक्षते सदा"

(ऋग् ७.८३.९)।

किञ्च,

कृष्टीरन्यो धारयति प्रविक्ता,
वृत्राण्यन्यो अप्रतीनि हन्ति"

(ऋग् ७.८५.३)।

इन्द्रोऽस्ति प्रधानसेनापतिः, यो रणक्षेत्रे शत्रून् संहरति। वरुणः एतादृशो राज्याधिकारी वर्तते यः संग्रामं न गच्छति, किन्तु राष्ट्रे निवसन्नेव प्रजाजनान् धारयति, रक्षति, राज्यस्य च कर्माणि पश्यति। अनयोः साहाय्येनैव सुदानगुणयुक्तो नृपो बलवत्तममपि शत्रुं जयति। एतदेव रहस्यमस्याः कथायाः।

एवमस्माभिः कासांचित् कथानां मूलं वेदेषु दर्शितम्, तासां च वैविकदृष्ट्या सत्यार्थोऽपि प्रकाशितः। अनया दृष्ट्या चेत् प्रचलिताख्यानानामवलोकनं स्यात् तर्हि महाभारतपुराणप्रभृतिषु वर्णितानामनेकासां कथानां सत्यार्थः प्रकटीभवितुमर्हति।

भगवत्पाददयानन्दसरस्वतीस्वामिनाम् अपूर्वा कृतिः

# चतुर्वेद-विषयानुक्रमणी

श्री युधिष्ठिरो मीमांसकः, भारतीयप्राच्यविद्याप्रतिष्ठानम् ( अलवरद्वार, अजमेर )

माननीया वेदविवक्षणास्तत्स्वाध्यायोत्सुका वा विद्वांसः ! अद्य भवतां पुरस्ताद् वेदविद्याप्रचारायोत्सर्गिकृतकायानां तत्रभवतां भगवत्पादानां दयानन्दसरस्वतीस्वामिनाम् एकस्या अपूर्वकृतेः परिचय. प्रदीयते । यद्यप्यस्या निर्देशो मयाऽष्टादशवर्षेभ्यः प्राक् "ऋषि दयानन्द के ग्रन्थों का इतिहास" नाम्नि ग्रन्थेऽकारि, तथापि केचन एव विद्वांसस्तेन लब्धपरिचयाः सन्ति । अस्या महत्त्वपूर्णाया अपूर्वायाः कृतेस्तत्र नाम 'चतुर्वेदविषयसूची' इति वर्तते । परन्त्विहास्माभिरियं कृतिः प्राचीनार्षग्रन्थनामशैल्यनुसारं ऋष्यनुक्रमणी, छन्दोऽनुक्रमणी, देवतानुक्रमणी इत्यादिनाम्नामिव 'चतुर्वेदविषयानुक्रमणी' नाम्नाभिहिता ।

प्राचीनैर्ऋषिमुनिभिर्यद्यपि चतुर्णां वेदानामर्थविज्ञापनाय ऋषिदेवताछन्दोविषयका बहवोऽनुक्रमणीसंज्ञका ग्रन्था निबद्धा यैर्वेदार्थज्ञाने पर्याप्तं साहाय्यमस्माभि. प्राप्यते । यद्यपि च देवतानुक्रमणीभ्यो वेदविषयविज्ञानेऽपि साहाय्यं प्राप्यते तथापि यथाविधं वेदार्थविज्ञाने साक्षात् साहाय्यं तत्रभवतां दयानन्दस्वामिनां चतुर्वेदविषयानुक्रमण्याः प्राप्यते न तथाविधं प्राचीनेभ्यो देवतानुक्रमणीग्रन्थेभ्योऽवाप्यते । तत्र कारणद्वयं वर्तते ।

प्रथमं तावत् प्राचीनासु देवतानुक्रमणीषु मन्त्रगतान्येवाग्निवाय्विन्द्रादीनि पदानि देवतात्वेन पठितानि । तैर्न साक्षादिदं विज्ञायते यत् कस्मिन् मन्त्रे सूक्ते वाऽग्न्यादिपदैः कतमो विषयः प्रतिपाद्यते, मन्त्रगतपदानामनेकार्थाभिधायकत्वात् । भगवद्दयानन्दस्वामिभिरस्यामनुक्रमण्यां प्रतिवर्गं प्रतिसूक्तं प्रत्यध्यायं वा को विषयः प्रतिपाद्यत इति स्वशब्दैः साक्षान्निर्दिश्यते तेनासन्दिग्धरूपेण विज्ञायते यदत्राग्न्यादिपदानां कोऽभिप्राय इति ।

अपरं च, प्राचीनाः सर्वा अप्यनुक्रमण्यः 'वेदा यज्ञार्थमेव प्रवृत्ता.' इति मतमनुरुध्य देवतानिर्देशं विदधते । यज्ञशब्देन च भौतिकं कर्मकाण्डमेव गृह्यते, न भगवत्पाददयानन्दस्वामिभिः स्वीकृतो यज्ञस्य विस्तृतोऽर्थः । एतच्च ता अनुरुध्य प्रवृत्तैः प्राचीनैर्ग्रन्थैरतितरां विस्पष्टं विज्ञायते । भगवत्पादास्त्वत्र साक्षाद् अधियज्ञम् अधिदैवतम् अध्यात्मं चार्थमनुसृत्य सरलैः शब्दैर्वेदानां विषयनिर्देशं विज्ञापयन्ति । अत एव तत्रभवतां भगवत्पादानां कृतिरियं वैदिकवाङ्मये वेदार्थविज्ञापनाय प्रवृत्तेषु विविधेषु ग्रन्थेषु सत्सु सर्वानपि ग्रन्थानतिशेते । अनया दृष्टया भगवद्दयानन्दपादानामियं लघ्वपि कृतिर्मूर्धाभिषिक्ता वर्तते ।

भगवद्दयानन्दसरस्वतीभिर्वेदभाष्यविरचनात् प्राक् वेदविषयकं प्राचीनं मध्यकालीनं द्विविधं भारतीयं मतं पाश्चात्यमतं च सम्यग्विज्ञाय तैरनुसारं प्रतिमन्त्रं विचारं कृत्वा प्रथमं वेदस्वरूपं निश्चितम् अर्थात् वेदाः सर्वविद्यामयाः वा भौतिककर्मकाण्डपरा वा अजाविपालगीतयुता बालिशा वेति । तत्र प्राचीनानामृषिमुनीनां वेदविषयकं सर्वविद्यामयत्वं मत सत्यमिति विज्ञाय तदनुसारं चतुर्णामपि वेदानां प्रतिवर्गं प्रतिसूक्तं च यो विषयस्तैर्दृष्टस्तस्यात्र संकलनं विहितम् । एवं च चतुर्णामपि वेदानां सम्यगवगाहनं कृत्वा यन्नवनीतं तैरुपलब्धं तत्संक्षेपेण संगृह्य सर्वेभ्यः संप्रदातुं

तदनुसारं वेदभाष्यस्य प्रणयनमारब्धम् ।

यद्यपि तत्रभवताम् आचार्यपादानां चतुर्णामपि वेदानां भाष्यस्यासीत् प्रणयनेच्छा तथापि भारतीयानामस्माकं दुर्दैवविपाकाद् अल्पायुष्येव तेषां स्वर्गमनात् केवलं यजुर्वेदस्य सम्पूर्णम्, ऋग्वेदस्य सप्तममंडलस्य द्विषष्टितमसूक्तस्य द्वितीयमन्त्र यावदेव भाष्यं भगवत्पादै रचितम् ।

यद्यपि भाष्यप्रणयनकाले भगवद्दयानन्दपादैः क्वचित्क्वचित् चतुर्वेदविषयानुक्रमण्यां निर्दिष्टानां विषयाणां परित्यागं कृत्वाऽन्ये विषयास्तत्र तत्रोट्टङ्किता, तथापि नैतेन क्वचिद् तदुक्तविषयपरित्यागेनास्या अनुक्रमण्या गौरवं किञ्चिदपि हीयते । यतः पक्षान्तरे विषयानुक्रमण्यां निर्दिष्टानामपि विषयाणामौचित्यस्यानाशात् ।

अपि च सामाथर्वयोरत्रशिष्टस्यर्ग्वेदस्य च भगवत्पाददृष्ट्यार्थविज्ञानाय नाद्याप्यस्य ऋते किञ्चिदन्यत् साधनमस्माकं सविधे वर्तते । अनया दृष्ट्या भगवत्पादैर्विरचितस्यास्य सूत्रात्मकस्य भाष्यस्य कियन्महत्त्वमित्यनायासेनैव शक्यते विज्ञातुम् ।

अपि च यदीद भगवत्पादकृतं सूत्रभाष्य यथाकाल प्रकाशितमभविष्यत्तर्हि भगवत्पादानामनन्तरं यैरार्यमुनितुलसीरामशिवशंकरक्षेमकरणजयदेवप्रभृतिभिर्विपश्चितैर्वेदभाष्याणि विरचितानि तेषामपि स्वरूपमधिकं दिव्यमभविष्यत् । वेदभाष्यकृतामेतेषां विद्वद्वराणां वेदे प्रविविक्षूणां स्वाध्यायशीलानां चार्याणां दौर्भाग्यमेव यदियं भगवत्पादानां मूर्धाभिषिक्ता कृतिस्तद्ग्रन्थानाम् आर्षग्रन्थानां प्रचाराय प्रसाराय मुद्रणाय च स्वयमधिकृतायाः परोपकारिणीसभायाः कालगृहे आजन्मकारावासप्राप्तस्य कृतापराधस्य जनस्येवासूर्यंपश्या सती स्वायुषोऽन्तिमान् क्षणान् यापयति ।

यद्यस्य ग्रन्थस्य प्रकाशनमभविष्यत्तर्हि न केवलं भगवत्पाददृष्टं वैदिकं विज्ञानमेव लोके प्राकाशयिष्यद् अपितु या बहुविधा वेदविषयकाः शङ्का अस्माकं हृदयान् व्यथयन्ति ता अपि समूलखातमुदखनिष्यन् । उदाहरणायेह द्वयोः स्थलयोनिर्देश. क्रियते—

अस्ति ऋग्वेदे दशममण्डले दशमं सूक्तम् यत् यमयमीसूक्तनाम्ना वेदविद्वत्सु प्रसिद्धम् । अनेके भारतीया. पाश्चात्याश्चाधुनिका वेदाध्येतार. तत्र सोदर्ययो. स्वसृभ्रात्रोरश्लीलं संवादं मन्यमाना यथा वेदं दूषयन्ति तदपि नाविज्ञातम् आर्याणाम् । एतत्सूक्तविषये तत्र भवद्भिराचार्यपादैरस्यामनुक्रमण्याम् 'जलपदार्थविद्यावर्णनम्' इति विषय उट्टंकित. । 'प्रकरणश एव मन्त्रा निर्वक्तव्याः' इति सिद्धान्तानुसारमाचार्यपादै पूर्वसूक्ते साक्षादुपलभ्यमानमपां वर्णनं दृष्ट्वाऽस्मिन् सूक्तेऽपि जलविद्यावर्णनं दृष्टम् ।

पूर्वसूक्ते यदपां वर्णनं तत्पृथिवीस्थानीयस्याप इति मन्त्रार्थविचारणात् तन्मन्त्राणां गायत्र्यनुष्टुप् छन्दोन्वितत्वाच्च स्पष्टं विज्ञायते । अस्मिन् दशमे यमयमीसूक्ते पृथिवीस्थानीयानामेवापां यदा सूर्यरश्मिभि विभागो भवति तदा ताद्विधा विभज्यन्ते । तां एवं विभागौ साम्प्रतिकवैज्ञानिकपरिभाषायां हाईड्रोजनाक्सीजननाम्ना व्यवह्रियेते । तयोर्विभागयोरेकस्यांशव सूक्ष्मास्सन्तोऽप्यन्यतरदृष्ट्या महीयांसो भवन्ति । तत्र ये महीयांसस्ते यमो संज्ञयोच्यन्ते, सूक्ष्माश्च यमसंज्ञया । यतः स्त्रियाः संघात्मकत्वात् ( स्त्री स्त्यायतेः, स्त्यै ष्टचै संघाते ) 'हिमारण्ययोर्महत्वे' इति स्त्रीप्रत्ययविधायके सहत्वे स्त्रीप्रत्ययविधानदर्शनाच्च यमयमीसंज्ञयोरयं विभागो द्रष्टव्यः ।

एवं च ता आपो द्विधा विभागं प्राप्य सूक्ष्मो-

भूताः सूर्यरश्मिभिराह्लियमाणा उपरिगच्छन्ति । तत्र च मध्यमस्थानं यावद् प्रथम् उभावप्यंशौ सहैव गतिं कुरुतः । तदनु सूक्ष्मतरो यमसंज्ञको भागस्ततोऽप्युपरि यावद्द्युलोकं याति । अत एवाधिदैविकविज्ञानानुसारं मन्त्रार्थविज्ञापके निघण्टुग्रन्थे तद्व्याख्याने निरुक्ते च मध्यमस्थाने उभे यमयमीपदे पठ्येते व्याख्यायेते च, यमशब्दश्च द्युस्थाने । एतत्संकेतानुसारं यमयमीसूक्तस्था मन्त्रा अनायासेनैव व्याख्यायन्ते । तत्रोक्ता 'गर्भे नु नौ जनिता दम्पती' 'किं भ्रातासद्यदनाथं भवाति, किमु स्वसा यन्निर्ऋतिर्निगच्छात्' इत्याद्यंशा अपि सहजभावेनैव गतार्थका भवन्ति । यत उभावपि यमयमीसंज्ञकौ विभागौ स्थूलरूपाभ्योऽद्भ्य एव समुद्भूतावतो गर्भ एव तौ सह जनितत्वाद् भ्रातस्वसृशब्दाभ्यामुच्येते । यतो दमस्य गृहस्य शरणस्य स्वाश्रयस्य मूलकारणस्य अब्रूपस्य तावेव पती रक्षकावत एतौ दम्पती इत्युक्तौ । यदा च द्युस्थानं प्राप्तः सूक्ष्मोंऽशः सोमाश्रयीभूतात् सूर्यात् सोमरूपमुपलभ्य पुनरावर्तते तदाऽन्तरिक्षे यमीरूपांशेन सह तस्य समागमो भवति पुनश्च तौ मिलित्वा जलरूपं प्राप्येह लोकं प्राप्नुवन्ति । अत एवौर्ध्वं गच्छन् यमो ब्रवीति – 'आ घा ता गच्छानुत्तरा युगानि यत्र जामयः कृणवन्नजामि' इति ।

वेदेषु प्रयुज्यमाना मातृपितृभ्रातृस्वसृदम्पती पुत्रनप्तृप्रभृतयः शब्दा मुख्यया वृत्त्या यौगिकार्थमेव ब्रुवन्ति । तमेव च मूलभूतं यौगिकमर्थमाश्रित्यैते लोके योगरूढा सम्पद्यन्ते । तस्मान्न वेदे एतैर्नामभिरुच्यमानाः पदार्थाः लोक एव सचेतना एवाश्रियन्ते । अपि च यास्य सूक्तस्य वैदिकसम्प्रदाये यमयमीसूक्तेति संज्ञा साप्यनयोर्यमयम्योराधिभौतिकत्वमेव व्यञ्जयति । यदि हि नामेह यमयम्यौ कौचित् सोदर्यौ भ्रातरावभविष्यताम् तर्हि यथा मातापितरौ स्वसृभ्रातरौ सीतारामौ आदिषु स्त्रिया अभ्यर्हितत्वमाश्रित्य पूर्वनिपातः क्रियते तथाऽत्रापि सूक्तस्य यमयमीसूक्तेति संज्ञाऽभविष्यत् । यतस्त्वत्र यमस्य पूर्वनिपातः, अतोऽत्र यमस्याभ्यर्हितत्वं विज्ञायते न यम्याः । यमस्याभ्यर्हितत्वं चान्तरिक्षं परित्यज्य द्युलोकं यावद् गमनात् स्पष्टमेव ।

अपरं चास्या भगवत्पादविरचिताया विषयानुक्रमण्याः स्थलमुदाहरणीयं वर्तते तदस्त्यथर्ववेदस्य विंशतितमस्य काण्डस्य कुन्तापसूक्तनाम्ना प्रसिद्धम् । कुन्तापसूक्तविषये आचार्यपादैरेवमुच्यते—'अथ कुन्तापसूक्तानि—भद्रेण वचसा वयमित्यादि · · · · इति कुन्तापसूक्तानि समाप्तानि । परिशिष्टानि प्रक्षिप्तानीति विज्ञेयम् ।'

एतानि कुन्तापसूक्तान्यपि वेदविदुषां शिरःपीडामुत्पादयन्ति । एतेषां विषये आचार्यपादैः कृतो निर्देशोऽत्यन्तं महत्वं बिभर्त्ति ।

एवमेव सामवेदे पूर्वयोरार्चिकयोरन्तरालं पठ्यमाना माहानाम्न्य ऋचः किं साम्न एकदेशभूता अनंशा वेति जायते शङ्का । आचार्यपादैरासामृचां विषयनिर्देशाकरणाद् विज्ञायते यत्ते 'नेमा माहानाम्न्य ऋचः साम्नएकदेशा.' इति विज्ञापयन्ति ।

मया विगतेषु दशसु वर्षेषु बहुधा प्रयतितं यदस्या वेदोद्धारकस्य महर्षेरपूर्वाया अभूतपूर्वाया वा कृते. 'परोपकारिणी सभा' कथंचित् मुद्रणं कृत्वा वेदार्थबुभुत्सूनां विदुषां सदर्थविज्ञानाय मार्गं प्रशस्तीकुर्यात् परन्त्वहमद्ययावदस्मिन् कर्मणि न कृतकार्योऽभवम् ।

आशासे भगवद्दयानन्दपादानां श्रद्धालवो विद्वांसोऽस्या भगवत्पादविरचिताया 'चतुर्वेद विषयानुक्रमण्याः' प्रकाशनाय श्रीमतीं परोपकारिणीं सभां प्रेरयिष्यन्तीति ।

———o———

# कापिलशास्त्रस्य वैदिकत्वम्

श्री उदयवीरः शास्त्री, गाज़ियाबाद-निवासी

प्रजल्पन्ति किल वादिनः केचित्—कापिलं दर्शनमवैदिकमिति । यदा जिज्ञास्यते—किन्नाम अवैदिकत्वमिति ? तदा समुद्घोषयन्ति परिसीमितनिजसम्प्रदायपरिकल्पितां काञ्चन परिभाषाम्। तथाहि—सन्ति खलु तत्र तत्रोपनिषत्सु तथाविधाः सन्दर्भाः, ये ब्रह्मणो जगदुपादानकारणत्वमुपवर्णयन्ति । एवं श्रुतिमूलकत्वादयमेव सिद्धान्तः श्रौतो वैदिको वा वक्तु शक्यः । यद्दर्शनं मतमेतदुपेक्ष्य सत्त्वरजस्तमोगुणात्मिकां प्रकृतिमेव जगदुपादानकारणमङ्गीकरोति, कुतो न तद्दर्शनमवैदिकमुद्घोष्येत, ब्रह्मणोऽभिन्ननिमित्तोपादानकारणत्वस्वीकार एव वैदिकदर्शनस्य स्वरूपमित्युपपादयन्ति ते वादिनः ।

ये स्वल्पीयांस. सन्दर्भाः समुद्घोषितसिद्धान्तपोषणाय प्रस्तूयन्ते, तेषामपि बलादन्यथाव्याख्यानमन्तरा नोक्तार्थसाधकत्वमिति स्पष्ट जायते यदि गाम्भीर्येण सोऽर्थो विचारितः स्यात् । तथाविध मुण्डकोपनिषद्गतमन्यतम सन्दर्भमत्र विवेचयाम. । स चैषः—

यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति, यथा सत. पुरुषात् केशलोमानि तथाऽक्षरात् संभवतीह विश्वम् ॥

अत्रोपनिषद्वाक्ये त्रीण्युदाहरणानि ब्रह्मणः सकाशाज्जगत्सर्जनविधिप्रदर्शनाय समुपात्तानि । तत्राद्यमुदाहरणमूर्णनाभिविषयम्, अत्र वाक्ये 'यथा-तथा' इति पदयोः प्रयोगो यामन्तर्भावनामभिलक्ष्योपनिषत्कृता विहितः, सा सर्वथापि नोपेक्षणीयतामर्हति। संश्लिष्टपदद्वयप्रयोगोद्भावितविशिष्टार्थप्रतिभासे प्रस्तुतसन्दर्भोपजीव्यं तथाकथितं ब्रह्मणो जगदुपादानकारणत्वप्रतिपादनमनायासेन दूरोपेतं भवति । तत्राद्यं दृष्टान्तमादाय खल्वेष वाक्यान्वयः—यथा लूताजन्तुस्तन्तुजालं निर्मात्युपसंहरति च, तथा अक्षरात्-ब्रह्मणः संभवति विश्वम् । यथा जन्तुर्जालं सृजत इति समुद्गीयमाने जायते जिज्ञासा—कथं—कस्मात् साधनात् केन वा कारणेन स तन्तुजालं निर्माति ? अत्र सुस्फुटमेवैतत्—लूताजन्तुः किल तन्तुजालं स्वात्मभिन्नेन स्वाधिकृतेन जडभूतेन देहावयवराशिना विस्तारयति । देहावयवाः किल नात्मनोऽभिन्नाः, नात्मरूपाः । ये देहावयवास्तन्तुजालरूपेण परिणमन्ते, त एव तन्तुजालस्योपादानभूताः, नात्मा देहेऽधिष्ठातृत्वेन सन्निविष्टश्चेतनः । निश्चितमेतत्, यन्नात्मनो परिणामस्तन्तुजालम् । एवञ्च यथा ऊर्णनाभि सृजते तथा अक्षराद् विश्वं संभवति, इति वाक्यार्थसामञ्जस्यकृते ब्रह्मणः शरीरत्वेन कल्पितं माया-प्रकृत्यादिपदवाच्यं गुणत्रयात्मकं तत्त्वं जगदुपादानत्वेन स्वीकार्यम् । यत्तत्त्वं जगदाकारेण परिणमते, तदेव तदुपादानभूतम्, नैव चेतन ब्रह्म जगदाकारेण कदाचिदपि परिणमते, यथाऊर्णनाभिदृष्टान्ते नात्मनश्चेतनस्य परिणामस्तन्तुजालम्, तथात्रापि न ब्रह्मणश्चेतनस्य परिणामो जगत्; अपितु तदधिष्ठितस्य त्रिगुणात्मकस्य प्रधानस्यैवायं परिणामः । तदेव चास्योपादानकारणम् ।

उपनिषत्सन्दर्भस्य द्वितीयचरणे दृष्टान्तः—'यथा पृथिव्यामोषधयः सभवन्ति ।' अत्रापि विचारणीयम्—पृथिव्यां कथमोषधयः संभवन्तीति ? स्पष्टमेतत्-पृथिवी केवलमोषधिवनस्पत्यादीनामुद्भिज्जवर्गान्तर्गताना क्षुपगुल्मादीनां विविधतरूणाञ्चाधारभूता, न तूपादानकारणम्, उपादानकारणानि तु तेषां विशिष्टानि बीजान्येव तानि तानि । बीजमन्तरा न केवलं पृथिव्यादिसंपर्केण कथञ्चिदप्यंकुराद्युत्पत्तिः संभवति । ऊष्मा पृथिवी सलिलं कालाकाशादयो वा निमित्तकारणान्येवांकुरादीनाम् । एवं यथा ओषध्यादीनामाधारभूता केवलं पृथिवी, तथैव विश्वस्य जगत आधारभूत

ब्रह्म। अनयैव रीत्या यथातथेति पदनिर्दिष्टं दृष्टान्त-दार्ष्टान्तिकयोः साम्य सामञ्जस्यं वा समीकृतं भवति। आधारत्वाच्च जगतो निमित्तमेव ब्रह्म न तूपादानम्। उपादानं हि अन्वयिकारणं भवति। न हि जगति ब्रह्मकार्यं ब्रह्मान्वयित्वमुपलभ्यते, उभयोरपि सर्वथा भिन्नस्वरूपत्वात्। चेतनमानन्द-रूपञ्च ब्रह्म; अचेतनं परिणामि दुःखबहुलञ्च जगत्।

एवमुपनिषद्वाक्यस्य तृतीयचरणे दृष्टान्तः—यथा सतः पुरुषात् केशलोमानि। सत इति जीवत इत्यर्थः। जीवतः पुरुषात् केशलोमान्यपि चेतनात्मातिरिक्तदेहावयवेभ्य एव जायन्ते। न तु चेतन्यांशः कश्चित् केशलोमादिरूपेण परिणमते। सदिति विशेषणं पुरुषस्य ज्ञापयति, चेतनाधिष्ठित-देहादेवकेशलोमादीनामुत्पत्तिः, न केवलाच्चेतन-निरपेक्षादचेतनान्मृतादिदेहात्। एव चेतननिरपेक्षा पचेतनात् केवलात् प्रधानादपि न सभवति जगदुत्पत्तिः, यावन्नियन्तृत्वेन अधिष्ठातृत्वेन वा चेतनः परमात्मा प्रधानस्याचेतनस्य प्रेरयिता नाङ्गीक्रियेत चेत्। फलतः प्रकृतेर्जगदुपादानभूतायास्त्रिगुणात्मिकायाः प्रेरकत्वेन नियन्तृत्वेन वा परब्रह्म निमित्त-कारणं केवल जगत., इत्येवाशय. प्रस्तुतोपनिषत्सन्दर्भस्य विशदीभवति। एवञ्च सत्येतदर्थ-प्रतिपादकस्य कापिलदर्शनस्य कथमवैदिकत्व-शक्यमुपपादयितुम्।

'एकोऽहं बहु स्यां प्रजायेय' इत्यादीनि वाक्यानि तु सर्गात् पूर्वं ब्रह्मणो जगत्सर्जनसंकल्प-प्रकाशनभावनयैव उपनिषत्कारोक्तिरूपाणि। 'प्रजायेय' इति क्रियापदं प्रजनयेयम्-उत्पादयेयम्, इत्याद्यर्थपरमेव। अत एव तैत्तिरीयादिषु 'इदं सर्वमसृजत' इत्यादिवाक्यैरुपपादित ब्रह्मणो जगत्स्रष्टृत्वं संगच्छते, स्रष्टृहि जगतो ब्रह्म, न तु स्वयं जगदाकारेण परिणमते। अन्यथोपनिषद्वाक्ये 'असृजत' इति क्रियापदं विहाय 'इदं सर्वमभवत्' इत्युच्यमानं स्यात्।

अनेकत्रोपनिषद्वाक्येषु ब्रह्मणो यदेकत्वमुपपादितम्, तत्सर्वथाप्युपपन्नमेव। एकमात्रत्वं ब्रह्मणः सर्वशास्त्रसम्मतम्। ब्रह्मबहुत्वं न कयापि रीत्या शक्यमुपपादयितुम्। तदेकत्वप्रतिपादनं नान्यद्वस्तु-सत्त्वविरोधि। एको देवदत्त एव कुलमित्युच्यमाने नान्ये कुलीनाः साधनानि वा चेतनाचेतनादीनि प्रत्याख्यायन्ते, प्राधान्यन्तु देवदत्तस्य द्योत्यते। एवमेकत्वप्रतिपादकवाक्यानि ब्रह्मणः प्राधान्यं सर्वोत्कृष्टत्वमेवोपस्थापयन्ति।

अन्यच्च—सर्वा अप्युपनिषदः प्रायशो ब्राह्मण-ग्रन्थादीनां वेदव्याख्यानभूताना भागमात्रम्। न हि तत्र प्रतिपादितोऽर्थो वेदविरुद्धः कल्पयितु शक्यः। वेदेषु चानेकत्र परमात्मातिरिक्तस्य जगदुपादानस्य–वृक्ष, स्वधा, माया, अदिति, विधातुप्रभृतिपदैर्विवृतस्य सत्त्वं स्पष्टमुपलभ्यते। अथर्ववेदे (१०।८।४३) तु 'पुण्डरीक नवद्वार त्रिभिर्गुणेभिरावृतम्' इति 'त्रिगुण' पदेनैव त्रिगुणात्मकं जगदुपादानभूत प्रधानमुपदिश्यते। अत्र 'नवद्वार' पदेन मानवशरीरस्य ग्रहणम्। पदमिदमन्यत्रापि शरीरार्थत्वेन प्रयुक्तं दृश्यते। तथाहि—'अष्टचक्रा नवद्वारा देवाना पूरयोध्या' (अथर्व. १०।२ ३१), 'नवद्वारे पुरे देही हसो लेलायते बहिः' (श्वेता० ३।१८)। अथर्वमन्त्रे नवद्वारं शरीर त्रिगुणात्मकं जीवात्मनो निवासस्थानमित्युक्तम्। देहोपादानत्वेनोपक्षिप्तस्य प्रधानस्य सकलजगदु-पादानत्वमभिहितं भवति।

वेदेष्वनेकत्र प्रयुक्तं 'त्रिधातु' पदं जगदुपादान-भूतं त्रिगुणात्मकं तत्त्वं विनिर्दिशतीति विवेचन-मपेक्षते। पदमिदं 'त्रि-धातु' इति पदद्वयसंयोगेन सिद्ध्यति। 'त्रि' इति पदं विशिष्टसंख्यावाचकम्। 'धातु' पदञ्चानेकेष्वर्थेषु प्रयुक्तं दृश्यते। तथाहि—सुवर्णरजतादीनि खनिजानि तत्त्वानि, पृथिव्यादीनि महाभूतानि, आयुर्वेदप्रसिद्धानि वातपित्तश्लेष्माणि,

मज्जास्थिशुक्राणि च, व्याकरणे भ्वादीनि च पदानि धातुपदेन व्यवह्रियन्ते, सर्वेष्वेतेष्वर्थेषु संभावितेष्वतिरिक्तेष्वर्थेषु च समानत्वेन विद्यमाना विशिष्टैका भावना प्रतिभाति, यया पदस्य मूलभूतोऽर्थः सुस्फुटं विशदीभवति । सा चैषा समाना भावना— ये नाम धातुपदवाच्याः पदार्था, ते स्वयं मूलभूता आधारभूता वा । अयमभिप्रायः—अग्रे जायमानाना विविधविकाराणामाधारत्वं मूलत्वं वा तेषु धातुपदाभिधेयेषु तत्त्वेषु दृश्यते । सुवर्णादीन्यनेकविकाराणा कुण्डलरुचकादीनां मूलभूतानि, वातपित्तादीनि देहस्याधारभूतानि दैहिकविकाराणाञ्चानेकेषां मूलानि, पृथिव्यादीनि च सर्वप्राणिनां विविधव्यवहारस्याधारभूतानि तत्त्वानि; व्याकरणेऽप्येवं भ्वादिपदानि शब्दरचनाया मूलाधारभूतानि स्वीक्रियन्ते खल्वाभिधानिकैः । इदमस्य तात्पर्यम् यदेतस्य धातुपदस्य तदेव वस्तुभूतं तत्त्वं वाच्यत्वेन स्वीकार्यम्, यन्नाम मूलभूतमाधारभूतं वा विकारजातस्य नानाविधस्य । स्वयं 'धातु' पदनिर्वचनं धात्वर्थमाधारीकृत्य तमेवार्थं स्पष्टीकरोति— धारणार्थात् 'धा' धातोः औणादिके (१।६९) तुनि कृते 'धातु' पदसिद्धिः, यस्यार्थो भवति—धारयितृ, आधारभूतं वा तत्त्वम् ।

अनेन 'धातु' पदेन सह 'त्रि' पदस्य संख्यावाचकस्य योगे सञ्जाते—त्रयाणा धातूनां मूलाधारभूतानां वा तत्त्वानां समाहारः—इत्येष एवार्थो भवति पदस्यैतस्य । पश्यामो वयम्—एवम्भूतस्यार्थस्य स्पष्टा सामञ्जस्यपूर्णा च व्याख्या कापिल साख्यशास्त्रमुपजीव्यैव भवितुमर्हति नान्यथा । अखिल ब्रह्माण्डस्य मूलाधारभूताना मूलोपादानकारणात्मकाना सत्त्वरजस्तमोनाम्नां त्रयाणां तत्त्वाना कापिलसाख्यशास्त्रे एव विशदं यथायथञ्च वर्णनमुपलभ्यते । एवं वेदोक्तस्य 'त्रिधातु' पदस्य तदनुकूल व्याख्यान कुर्वत् साख्यशास्त्रमवैदिकं स्यादिति कथ संभाव्यते । तथा च प्रावादुकाना तथाकथन सर्वथाप्युपहासास्पदमेव, न वस्तुकथनम् ।

—०—

**दुरोकशोचिः क्रतुर्न नित्यो जायेव योनावरं विश्वस्मै ।**
**चित्रो यदभ्राट् छ्वेतो न विक्षु रथो न रुक्मी त्वेषः समत्सु ॥**

( ऋ० १. ६६. ३ ) ।

जिस घर में वसना कठिन है ऐसे घर की वह ज्योति है, वह हमारे अन्दर एक सदा-सक्रिय संकल्प की तरह है, वह हमारे घर मे पत्नी के समान है और प्रत्येक मनुष्य के लिये पर्याप्त है । जब वह अद्भुत विचित्र, प्रचण्डतया प्रदीप्त होता है तो वह प्रजाओं में श्वेत की तरह होता है । वह सुवर्णीय रथ की तरह है; हमारे युद्धों में वह तेजोरूप है ।

**दन्धवे वा यदीमनु वोचद् ब्रह्माणि वेरु तत् ।**
**परि विश्वानि काव्या नेमिश्चक्रमिवाभवत् ॥**

( ऋ० २. ५. ३ ) ।

जब कोई मनुष्य इस अग्नि को दृढ़ता के साथ स्थापित कर लेता है, तब वह ज्ञान के शब्दों को प्रतिध्वनित करने लगता है, और उसको पा लेता है, क्योंकि वह समस्त द्रष्टृ-ज्ञानों को आलिंगन करता है, जैसे नेमि पहिये को ।

# वेदवर्णितराजनीतिकराद्धान्ताः

व्याकरणाचार्यः श्रीरघुवीरमुमुक्षुशास्त्री वेदालङ्कारः, गुरुकुल कांगड़ी

अस्मिन् वेदपराङ्मुखे विज्ञानाऽभिमुखे सत्याचरणविमुखे दुर्मुखेऽतिघोरे कलौ कथं स्याद् वेदचर्चा यत्र सर्वे मानवा धर्मधीनाशकानार्थशास्त्राऽध्ययनाध्यापनकृतसङ्कल्पा दरीदृश्यन्ते । पञ्चत्वं गता वेदप्रचारप्रिया मानवाः । कालोऽपि स विलयं गतो यदा वेदमेव सर्वस्वं मन्यन्ते स्म मानवाः । क्वास्ति साम्प्रतं वेदध्वनिः ? क्व चास्ति स्मृतिस्मरणम् ? क्व च दर्शनदर्शनम् ? क्व चोपनिषदालापः ? अद्यत्वे तु वेदा विदीर्यन्ते । शास्त्राणि शीर्यन्ते । स्मृतयो विस्मर्यन्ते । धर्मश्च विलोप्यते मनुजापसदैः । राजनीतौ नास्ति वेदानामितरेषां शास्त्राणाञ्च महत्त्वमिति बुक्कन्ति कृतशास्त्रचञ्चुप्रवेशा अपि स्वात्मानं राजनीतिपण्डितंमन्या जनाः । मनुस्मृतिं पुरातनयुगीनामुपहासास्पदं मत्वा जातवेदोऽर्पणा कुर्वन्तीति विलोक्य कस्य मनो न दूयते ? चेतो न खिद्यते ?

यद्यपि वेदशास्त्रविरोधतत्परमानवबाहुल्यं दृश्यते लोके परं सन्ति तथापि वेदोद्धारकृतसङ्कल्पा धर्मप्रचारसमर्पितजीवना मानवाः । वेदेनैव जगद्धितसम्भवः, वेदेनैव जगच्छान्तिर्लभ्या, वेदेनैव निर्दोषा राज्यव्यवस्था प्रापणीयेति तेषां मतिः । प्रातःस्मरणीयेन महर्षिदयानन्देनाप्यवोचि—सर्वा सत्या विद्या विलसन्ति वेदेष्विति । राजनयोपदेशोऽपि समुपलभ्यते बाहुल्येन वेदेषु । प्रतिपाद्यन्तेऽत्र केचन राजनीतिप्रतिपादका राद्धान्ताः । अथर्ववेदे विस्तरेण प्रतिपादितानि राज्यव्यवस्था, निर्वाचनप्रणाली, राज्ञः कर्त्तव्यानि च । निर्वाचनप्रणाली वेदाऽभिमतेत्यत्र नास्ति मतद्वयम् । निर्वाचनप्रणालीव राजविषयेऽन्येऽपि सिद्धान्तास्तत्र वर्णिताः । ते चैते—

(१) राज्यस्य प्रकारद्वयं भवति । (क) माण्डलिकराज्यम् । (ख) सार्वभौमराज्यम् । लघूनां राज्यानां राजान इन्द्रसञ्ज्ञावाच्याः स्युः । सार्वभौमराज्यस्य च राजा 'इन्द्रेन्द्र' सञ्ज्ञावाच्यः स्यात् ।

(२) नृपोऽपि सामान्यमानवोऽस्ति । स्वगुणैः स राज्यमलभत । यदि सोऽत्याचारी स्वेच्छाचारी वा भवेत्तर्ह्यपसारयिष्येत पदान्मानवैः । नास्ति स देवांशो भगवतोऽशो वा यथाऽऽसीत् प्राचीनविचारः ।

(३) राजा निर्वाचनप्रणाल्या निर्वाचितः स्यात् ।

(४) राज्ये सभाः समितयश्च स्युः । नीचेरेतेषां सिद्धान्तानां प्रतिपादका मन्त्रा उट्टङ्क्यन्ते ।

**(१) राज्यस्य प्रकारद्वयम्—**

इन्द्रेन्द्र मनुष्याः परे हि सं
ह्यज्ञास्था वरुणैः संविदानः ।
स त्वायमह्वत् स्वे सधस्थे
स देवान् यक्षत् स उ कल्पयाद्विशः ॥

अथर्व० ३. ४. ६ ॥

शब्दार्थ—( इन्द्रेन्द्र ) राज्ञामपि राजन् ! ( मनुष्याः ) मानवप्रजासु ( उपेहि ) आगच्छ । ( वरुणैः ) वरुणनामकर्मचारिभिः सह, वरुणनाम राज्ञैः सह यद्वा वरणकर्तृभिः प्रजाभिः सह ( संविदानः ) मिलित्वा ( सम् ) सम्यक्तया ( हि ) निश्चयेन ( अज्ञास्थाः ) प्रजारक्षाया ज्ञानं प्राप्नोतु । ( स्वे सधस्थे ) अस्मिन् राष्ट्रे ( स ) वरुणः ( त्वाम् ) त्वा राजानं ( अह्वत् ) आहूतवानस्ति । ( स ) भवान् ( देवान् ) दिव्यविचारान्, देवसंज्ञकपुरुषान् वा ( यक्षत् ) राष्ट्रे वर्धयतु ( स ) भवान् ( विशः ) प्रजां ( कल्पयात् ) सामर्थ्यवतीं

करोतु । अत्रेन्द्रेन्द्रशब्देन स्पष्टमेव सूच्यते यद्राज्ञामपि राजा कश्चित् सार्वभौमो राजा स्यात् । तदधीनानि च माण्डलिकराज्यानि स्युः । एतेषां राज्यानां समेषां पृथक्-पृथक् राजानः स्युः । ते चेन्द्रेन्द्रस्य शासनं पालयेयुः । अत्र द्वितीयो मन्त्रो भवति—

अच्छ त्वा यन्तु हविनः सजाता
अग्निर्दूतोऽजिरः संचरातै ।
जायाः पुत्राः सुमनसो भवन्तु
बहुं बलिं प्रति पश्यासा उग्रः ॥

शब्दार्थ—( सजाताः ) समानजन्मानोऽन्ये राजानः ( हविनः ) करप्रदातारो भूत्वा ( अच्छ ) सम्यक्तया ( त्वा ) तव पार्श्वे ( यन्तु ) आयान्तु ( अजिरः ) त्वया प्रेरितः ( अग्निः ) राज्यव्यवहारेष्वग्रगणी ( दूतः ) तव सन्देशदाता ( संचरातै ) सर्वत्र विचरेत् । ( जायाः पुत्राः सुमनसो भवन्तु ) राष्ट्रस्य स्त्रियो बालकाश्चोत्तममनसः स्युः । (उग्रः) त्वं शक्तिशाली सार्वभौमराजा ( बहून् ) अनेकान् ( बलिम् ) माण्डलिकै राजभिः प्रदत्तान् करान् (प्रतिपश्यासै) स्वसम्मुखमवलोकय ।

इत्थं मंत्रद्वयेन विदितं भवति यद्राष्ट्रे माण्डलिकराजानः स्युः । समेषामधिपतिश्च सार्वभौमो राजा स्यात् । सर्वे तस्मै करं दद्युः । साम्प्रतमेषैव व्यवस्था दरीदृश्यतेऽस्मद्राष्ट्रे । सन्त्यत्र भिन्नानि राज्यानि । समेषाञ्च मुख्यमन्त्रिणः पृथक् पृथक् सन्ति । तेषामधिपतिश्च प्रधानमन्त्री राष्ट्रपतिर्वाऽस्ति ।

**(२) नृपोऽपि मानव एवास्ति—**

पुरा युगे श्रूयते स्म यद्देवांशोऽयं राजा भगवतोंऽशोऽयं राजा । देवमेव मत्वा नमन्तिस्म प्रजास्तं राजानम् । परं वेदस्तु ब्रवीति यदयमपि मानव एवास्ति । नास्ति देवो भगवान् वा । तत्राय मन्त्रो भवति !

भूतो भूतेषु पय आदधाति
स भूतानामधिपतिर्बभूव ।
तस्य मृत्युश्चरति राजसूयं
स राजा राज्यमनुमन्यतामिदम् ॥

शब्दार्थ—( स ) राजा ( भूतः ) सामान्यमानव एवास्ति न च देवो भगवान् वाऽस्ति । ( भूतेषु ) जनेषु ( पयः ) दुग्धं तदुपलक्षितानन्याश्च पदार्थान् ( आदधाति ) समुत्पादयति अत एव स ( भूतानाम् ) प्रजानाम् ( अधिपतिर्बभूव) राजाऽभवत् । ( तस्य ) अस्य ( राजसूयम् )राज्ये ( मत्यश्चरति ) मृत्यरपि विचरति । ( स राजा ) स नृप ( इदं राज्यमनुमन्यताम् ) इदं राज्यं स्वीकुर्यात् ।

अभिप्रायोऽयं यद्राजा सामान्यमानव एवास्ति । तथा यदि सोऽपि विपरीताचरणं विधास्यति तर्हि पदच्युतं करिष्यते प्रजाभिः । 'अत्र राजाधीना प्रजा, प्रजाधीनो राजा' इति सिद्धान्तः प्रतिभाति । महर्षिणाऽपि सिद्धान्त एष स्वीकृतः ।

**(३) निर्वाचनप्रणाली—**

आयमागन्पर्णमणिर्बली
बलेन प्रमृणन्त्सपत्नान् ।
ओजो देवानां पय ओषधीनां
वर्चसा मा जिन्वत्वप्रयावन् ॥

शब्दार्थ—( अयम् ) एष ( बली ) बलाधारः ( पर्णमणिः ) मतदानपत्रं ( बलेन ) बलेन ( सपत्नान् प्रमृणन् ) अरीन् ध्वंसयन् ( आगन् ) मम पार्श्वं आगच्छेत् । ( देवानामोजः ) इदं पत्रं राज्याधिकारिणां बलमस्ति । ( ओषधीनां )शिक्षा-

संस्थानां ( पयः ) सारभूतमस्ति । ( अप्रयावन् ) इदं मत्तो दूरी न भवेत् । ( वर्चसा ) स्वतेजसा ( मांजिन्वतु ) तृप्तं करोतु ।

मन्त्रेऽस्मिन् प्रतिपादितं स्पष्टतया यत् प्रजाभिरेव राज्ञो निर्वाचनं विधातव्यम् । अस्त्येषा प्रजातन्त्रप्रणाली । सायणाचार्येण मन्त्रस्यास्य विनियोगो वशीकाराय कृतः । पत्राणि हस्ते वध्वाऽरीन् वशीकुर्यादिति तस्य मतिः । परं नेदं समीचीनम् । ओषधीशब्दं मन्त्रेऽवलोक्यैव भ्रमोऽभवत्तस्य । परन्त्वोषधी शब्दस्यार्थस्तु भवति—शिक्षा संस्था । ओषं दोषं दहन्तीति व्युत्पत्त्या शिक्षा संस्था एवौषधी । सोमः—स्नातक. । सोमश्चौषधीनां सारः । इत्थमेव स्नातकोऽपि शिक्षासंस्थानां सारः । तस्य स्नातकस्य मतमपि तदुपलक्षणेन सार एव कथितोऽत्र । सूक्तेऽस्मिन्नष्टौ मन्त्राः सन्ति । समेषां मन्त्राणां भावोऽयमेव यद्राष्ट्रस्य सर्वेऽपि मानवाः स्वकीयं मतदानं कुर्युः । मतप्रदानद्वारा निर्वाचनप्रणाल्या राज्ञो निर्वाचन कर्त्तव्यमिति वेदाऽऽदेशः ।

**(४) सभासमिती—**

जनतन्त्रनियन्त्रितजननिर्वाचितेन राज्ञा राज्ये सभा निर्मापणीया इति चतुर्थः सिद्धान्तः । अथास्मिन् विषये मन्त्रोऽयं भवति ।

**सभा च मा समितिश्चावतां**
**प्रजापतेर्दुहितरौ संविदाने ।**
**येना संगच्छा उप मा स शिक्षा-**
**च्चारुवदानि पितरः सङ्गतेषु ॥**

शब्दार्थ—( प्रजापतेः ) प्रजापालकस्य राज्ञः ( दुहितरौ ) कामनापूरिके कन्ये इव ( सभा च समितिश्च ) राजसभा राजपरिषच्च ( संविदाने ) मिलित्वा ( मा अवताम् ) मां राजानं रक्षताम ( येना ) येनापि सभासदा सह ( संगच्छै ) मन्त्रणामहं कुर्याम् । ( स मा उपशिक्षात् ) स एव मया सह विचारविमर्शं कुर्याम् । ( पितरः ) भो राष्ट्रपालकाः पुरुषाः ( संगतेषु ) सभासमितीनामधिवेशनेषु ( चारुवदानि ) अह राजा राष्ट्रहितायैव वदेयम् ।

अत्र प्रतिपादितं यद्राज्ञा द्वे सभे निर्मापणीये । अद्यत्वेऽपि प्रणाल्येषाऽवलोक्यते । साम्प्रत वीरभटपटलबलिदानसमुत्पन्नरक्ताम्बुसिञ्चितनूतनस्वा - तन्त्र्यतरुवरे प्रजातन्त्रे नो न च न विद्येते सभे द्वे । एका लोकसभा नाम । अपरा च राज्यसभा नाम । राज्यसभा निजराज्यव्यवहारे स्वतन्त्राऽपि भवति लोकसभानियमपरतन्त्रा ।

एवं चत्वारः सिद्धान्ता वर्णिता अत्र । ते च संक्षेपेणैते—

(१) माण्डलिकराजानः स्युः । चक्रवर्ती च राजा समेषा शासकः । (२) निर्वाचनप्रणाली स्यात् । (३) राजा अपि सामान्यमानवोऽस्ति । (४) सभासमिती निर्मापणीये । इत्थमेवान्ये मन्त्राऽपि विद्यन्ते वेदेषु राजनीतिप्रतिपादकाः । क्वचिद्दुन्दुभिसूक्तं क्वचिद्राज्याभिषेकसूक्त क्वचिद्राष्ट्रसगमनीसूक्तमिति सूक्तानां बाहुल्यं विद्यते वेदेषु । विस्तरेण प्रतिपादिता राज्यव्यवस्था तत्र । यद्यपि प्रजातन्त्रेऽस्मदीयेऽपि नाममात्रेण त्वेषैव प्रणाली प्रचलति परं न व्यवहारे सा सफलेतिखेदास्पदम् । सन्ति स्वार्थपरायणा वित्तपदलोलुपा अहंकारिणो मानवा राज्येऽस्मदीये । अत एवास्ति दुःखबाहुल्यं दुःशासनञ्च साम्प्रतम् । यदि सर्वेऽप्येते मानवा सत्यपरायणाः स्युर्तर्हि पुनरपि प्राचीनतमः काल आगच्छेत् ।

यद्यपि प्रणालीयं वेदप्रतिपादिता परं खेदास्पदं

विद्यते यद्विदेशीयमुद्राऽङ्कनं (मोहर) अत्र क्रियते। पाश्चात्यैर्ज्ञापितैषा प्रणालीति साटोपं निगद्यते। अत एव न भवति श्रद्धा वेदेषु। पाश्चात्यानां मानसिकी पराधीनता चास्मान् जड़ीभूतान् करोति। त एव शिष्टा इति मन्यामहे वयम्। अलीकमेतत् सर्वम्। अलीकमेतत् सर्वम्। वेद एव सर्वा विद्याः सन्तीति पुनरपि युक्तियुक्तपूर्वकं प्रतिपाद्यते वेदार्णवगाहनतत्परैः समुपलब्धमन्त्ररत्नमानवैः।

——:०:——

**नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन।**
**यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्॥**

कठ १।२।२३॥

यह आत्मा बहुत प्रभावशाली शिक्षा से प्राप्त नही होती, न ही मस्तिष्क की शक्ति से और न ही बहुत विद्वत्ता से। केवल वही जिसे यह सत्ता चुनती है, उसे प्राप्त कर सकता है, क्योकि उसी के प्रति यह आत्मा अपना स्वरूप प्रकट करती है।

**उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत।**
**क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत्कवयो वदन्ति॥**

कठ १।३।१४॥

उठो, जागो और ज्ञानी जनो को ढूढ कर उनसे ज्ञान उपलब्ध करो, क्योकि यह मार्ग बड़ा दुस्तर है, खांडे की धार के समान, इस पर चलना बडा कठिन है, ऐसा ही सन्तजनो ने कहा है।

**आत्मानं रथिनं विद्धि शरीरं रथमेव तु।**
**बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च॥**

कठ १।३।३॥

आत्मा को रथवान् जानो, शरीर को रथ, बुद्धि सारथि है और मन तो लगाम मात्र है।

**पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात् पराङ् पश्यति नान्तरात्मन्।**
**कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्॥**कठ २।१।१॥

स्वयम्भू परमात्मा ने देह की इन्द्रियो को बाहर की ओर खुलने वाला बनाया है। इसलिये जीव बाहर की ओर देखता है और अन्तरात्मा को नही देखता, परन्तु कोई विरला बुद्धिमान ही अमरता की प्राप्ति के लिए बाहर देखना बन्द करके अन्दर की ओर देखने लगता है और अपने आप को पा लेता है।

——:००:——

# श्रुतिमातुः वात्सल्यम्

लेखक.—श्री विश्वनाथ केशव छत्रे जोगलेकरवाडा, सिद्धेश्वर आलकल्याण (जिला ठाणे)

स्वं बालं रोदमानं चिरतरसमयं शांतिमानेतुमग्रे
द्राक्षं खार्जूरमाम्रं सुकदलमथवा योजयत्यम्बिकास्य।
तद्वच्चेतोऽतिमूढं बहुजननभवान्मौढ्यसंस्कारयोगाद्
बोधोपायैरनेकैरवशमुपनिषद् बोधयामास सम्यक् ॥

पूज्यपादैः श्रीमच्छंकराचार्यैः शतश्लोकी-नाम-वेदांतपरकाव्ये उपरिर्निर्दिष्टश्लोके (अष्टमे) श्रुतिः, मातेव अपत्यवत्सला मानवेषु इति यथार्थतया वर्णितम्। माता यथा विलपंतं बालं सान्त्वयितुं तस्य अग्रतः द्राक्षाफलानि, आम्रं रम्भाफलं वा खर्जूरं क्रमशः निदधाति तथैव श्रुत्या संसार-चिंता-दुःखितं मानवं सांत्वयितुं विविधोपायाः दर्शिताः। यथाशक्ति यथासमय च प्रत्येकेन मानवेन तेषां कोऽपि अवलंबितव्यः दुःखमुक्तं च भवितव्यम् इति सा उत्कटम् इच्छति। अत्र ब्रह्मर्षि प. श्री सातवलेकरैः महाराष्ट्र भाषायां संपादितस्य अथर्ववेदांतर्गत-ब्रह्मविद्या-प्रकरणस्य विशेषतः आधारेण केषांचित् उपायानां विवरणं यथामति कर्तुं प्रयत्यते।

सर्वोऽपि मानवः 'सुप्रभातम्' इच्छति। तदर्थं प्रातःस्मरणोचितानि बहूनि स्तोत्राणि रचितानि श्रीमच्छंकराचार्यैः। श्री समर्थ रामदासस्वामिभिः मनोबोधकाव्ये 'प्रभाते प्रभुर्ध्यायतां रामचन्द्र.' इतीदृशानि श्लोकदशकानि ग्रथितानि। अथर्ववेदेनापि 'प्रातःकालीना ईश्वर प्रार्थना' कांड ३ सूक्त १६ इत्यत्र (पृ० ७२) समावेशिता।

सभावम् एनां प्रार्थनां घोषयतः हृदयं तत्तद्देवतास्मरणेन सत्त्वगुणेन उत्पूर्यते। न केवलं घोषयतः परं भाविकश्रोतुः अपि हृदयं केनापि अनिर्वचनीयेन आनंदेन उल्लसितं भवति। स्मरामि एतादृशं उपभुक्तम् आनंदं मुहुःमुहुः, सुचिरकाले गतेऽपि।

नासिकनगरम् एकदा मध्यरात्रौ अहं प्राप्तः मित्रगृहे अस्वपम्। यावत् प्रातः अर्धजागरितः तावत् कोऽपि मधुरः स्वरः श्रुतियुग्मं सविशेषं सुखयति इति अन्वभवम्। सपूर्णप्रबुद्धः अभ्यजानाम् यत् मित्रस्य वेदशास्त्रसंपन्नः जनकः वेदपठनं गभीरवाचा कुर्वन् आस्ते इति। अप्रभातायां रजन्यां, शय्यालीनः एव सर्वांगश्रोत्रपुटैरिव मुहूर्तं तं अमृतोपमं वेदघोषं आकण्ठ पिबन् आसम्।

यदि अर्थज्ञानविहीनोऽपि ईदृशः वेदघोषः आत्मोल्लसनाय तर्हि अर्थज्ञानसहितः स. अधिकमेव आत्मोल्लसनाय भवेत् इति किं वक्तव्यम्?।

अस्यां अथर्ववेदान्तर्गतप्रार्थनायां प्रथमम् 'प्रातः अग्निं हवामहे'—अग्निं प्रथममेव कृतज्ञतापूर्वकं स्तुमः। अग्निः अस्मदर्थं अन्नं पचति, स्नानार्थं जलं तापयति, शीतकाले च शैत्यं निवारयति। अतः तस्य अस्तवनं कृतघ्नतां खलु आवहेत्। ततः 'प्रातरिन्द्रं हवामहे' इंद्रः—सर्वदेवतानाम् अधिपतिः अवश्यं स्तोतव्यः, तासां प्रसादं सपादयितुम्। 'प्रातर्मित्रावरुणौ' मित्रम्सूर्यःस्तु 'जगतः आत्मा तस्थुषश्च,' एकं नेत्रं भगवतः—'ज्योतिषां रविरंशुमान्' इति विभूतियोगे वर्णितः। यदि अद्यतनीं सेवकानां विचारसरणिम् अवलम्ब्य, 'न कोऽपि मे अर्घ्यं ददाति नमस्कारान् वा करोति प्रत्यहं सादरम्' इति अवमान्यजन्यरोषात् सहरते सः प्रकाशम् उष्णतां च दिनमात्रम् पृथिव्याः, तर्हि का दुरवस्था भवेत् प्राणि-वनस्पतीनाम् इति अशक्यमेव वर्णयितुम्। वरुणः अपि प्रमुखः पंचमहाभूतेषु। यदि सः न वर्षेत् वर्षतुमात्रम्,

अन्नाभावात् म्रियरेन् प्राणिनः लक्षकोटिशः सहसैव । अतः सः अवश्यं स्मर्तव्यः सादरम् । ततः 'अश्विनौ' आरोग्यरक्षणार्थं संस्तवम् अर्हतः निश्चयेन । ततः 'प्रातर्भगं, पूषणं ब्रह्मणस्पतिं, प्रातः सोममुत रुद्रं हवामहे' । सर्वेश्वरस्य इमानि नामानि कार्यानुरूपाणि ।

भगम्–भाग्यवन्तं, ऐश्वर्ययुक्तं, धनवंतम्
पूषणम्–सर्वेषां पोषकम्
ब्रह्मणस्पतिम्–अशेषज्ञानस्य स्वामिनम्
सोमम्–आह्लादकर चन्द्रमसम्, यः दिवाकर-कृतं चंडतापं रात्रौ शमयति सुखनिद्रां च ददाति जीवेभ्यः ।
रुद्रम्–उग्रं प्रचंडं शत्रुघातिन, शत्रून् रोदयन् स्वगर्जनयैव ।

इत्यादिस्तवनानन्तरम् 'इमां धियं ददन्नः उदव' इति प्रार्थ्यते परमात्मा । अस्माकम् इमां बुद्धिं नित्यं विवर्धयन् हे भगवन्, संरक्ष अस्मान् सर्वशः' इत्याशयोऽस्य वचनस्य ।

'भग प्रणो जनय गोभिरश्वैः–गावः, अश्वाश्च अस्मत् गृहे वसतु । तैः सह अस्माकं संतानवृद्धिः अस्तु ।

'नृभि नृवंतः स्याम' सज्जनैः सह सदा उषित्वा मानवोचितं कर्म–न पशुयोग्यं–क्रियताम् अस्माभिः ।

'वयं देवानां सुमतौ स्याम' अस्माभिः तादृशानि कर्माणि विधीयंतां यानि भवत्प्रसादं जनयेयुः अस्मासु ।

'स नो भग पुरएता भवेह' प्रभो, त्वम् अस्माकं नेता भव । वयम् त्वाम् सर्वभावेन अनुसरामः ।

'समध्वरायोषसो नमन्त दधिक्रावेव शुचये पदाय' उषःकालः अहिंसापूर्णे अकुटिले च कर्मणि अस्मान् प्रवर्तयतु । ईदृशैश्च कर्मभिः धनवान् ईशः अस्मत्समीपतरम् आगच्छतु ।

'अश्वावतीर्गोमतीर्न उषासो वीरवतीः सदमुच्छन्तु भद्रा' । गोवाजि-वीरैः युक्ता कल्याणकारिण्यः उषसः अस्मद् गृहाणि प्रकाशयतु ।

'घृतं दुहाना विश्वतः प्रपीता यूय पात स्वस्तिभिः सदा नः' भो उषसः ! दुग्ध-दधि-घृतादि-पुष्टिकारकपदार्थान् न प्रापयंत्यः बहुभिः कल्याणैः सह अस्मान् सर्वान् रक्षत ।

एवं सुखमयजीवनाय यद्यदिष्टं तत्तत् देवताभ्यः प्रभाते प्रार्थयितुम् उचितमेव मानवस्य । विना हि प्रार्थनां न क्षुद्रमपि वस्तु लभ्यते इति नित्य व्यवहारे अनुभवामः ।

'केनसूक्तम्' कांड १० सूक्त २ ( पृ० ७६ ) केनोपनिषदिव अन्तर्मुख करोति पाठकम् । 'केन पार्ष्णी आभृते पुरुषस्य, केन मांसं संभृतं केन गुल्फौ । केनांगुलीः पेशनीः केन खानि, केनोच्छलंखौ मध्यतः कः प्रतिष्ठाम् ।'

अस्मिन् सूक्ते, आपादमस्तकं शरीरस्य सर्वे अवयवाःएकैकश. यथाक्रमं निर्दिश्य, तेषां निर्माता कः, तेषां कार्यक्षमता च कुतः, इति पृष्टम् । वयं सर्वे जानीमः यद्, यदा कोऽप्यवयवः अकार्यक्षमः भवति, तदैव तस्य महत्त्वस्य तस्य प्रेरकशक्तेश्च चिंतने प्रेरणाम् अवाप्नुमः । यदा दुर्दैवेन सहसा अंधत्वम् उत्पद्यते तदैव दृष्टिसुखं याथार्थ्येन प्रतीयते । तदैव च नयनाभ्याम् अखण्डं तेजः समर्पयन्ती अदृश्या कापि ( परमात्मनः ) शक्तिरपि प्रतीयते । अहोरात्रं व्यवहारे व्यापृतं बहिर्मुखं मानवमनः अंतर्मुखं विधाय ततश्च आत्मावबोधसंपादनाय प्रेरयति इदं सूक्तम् । पू० पा० आचार्यैः शतश्लोकीकाव्ये स्थाने उक्तम्–

×एते जीवंति येन व्यवहृतिपटवो येन सौभाग्यभाजस्–तं प्राणाधीशमंतर्गतममृतममुं नैव मीमांसयंति ।। ( श्लो० ८ ) 'ब्रह्मावलोकधिषणः' कश्चित् मानवः यदा स्वनिर्मातारं जिज्ञासति तदा

×एते=देहस्त्रीपुत्रमित्रादय

भगवान् प्रमोदते । तथाच पशुवत् व्यवहरन्तः मानवाः तस्य खलु विषादाय भवन्ति ।

जिज्ञासुना स्वनिर्माता कथं कैः लक्षणैः अभिज्ञातव्यः उपासनीयश्च इत्यपि 'कस्मै देवाय हविषा विधेम' इत्यस्मिन् सूक्ते निवेदितम् । कांड ४ सूक्त२ (पृष्ठम् १५८) तस्य विश्वंभरस्य लक्षणानि–

१ यः आत्मदाः–नरस्य नारायणः य भवितुं शक्य स आत्मा येन दत्तः

२. बलदाः–आत्मिकं, मानसिकं, शारीरिक च बलं येन दत्तम्

३. विश्वेदेवा यस्य प्रशिषम् उपासते–सर्वे देवाः यस्याज्ञां परिपालयंति सूर्यः चंद्रः तारकाश्च समये उदयंति प्रकाशं च वितरंति, मेघाः वर्षंति, पृथिवी तृणसस्य-फलानि प्रसूते, वायुः वहति, नभश्च स्वैरसंचाराय अवकाशम् अर्पयति

४. यः द्विपदः चतुष्पदः ईशे–य. पशुपक्षि-मानवान् समस्नेहेन पालयति

५. यः प्राणतः निमिषतः जगतः महित्वा एकः राजा बभूव–यः श्वसतां निमिषतां च प्राणिनां एकमात्रः राजा स्वसामर्थ्येन तिष्ठति

६. यस्य छाया अमृत–यस्य कृपा एव जीवनम्

७. यस्य (अच्छाया) मृत्युः–यस्य अवकृपा एव मृत्युः

८. यस्कभाने क्रंदसी यम् अवतः–युध्यमानौ द्वौ अपि पक्षौ यं सविश्वासं स्वसंरक्षणार्थं शरणं व्रजतः

९. भियमाने रोदसी यम् अह्वयेथाः–भये उदिते, प्राणिनः यस्य साहाय्यं कारुण्यपूर्णप्रार्थनाभिः याचन्ते

यस्य रजसः असौ पन्थाः विमानः–यस्य उपासकस्य योग्यता (तेजः) अनुदिनं वर्धते ।

ईदृशः विश्वंभरः उपासितव्यः सर्वस्वार्पणपूर्वकं कल्याणेच्छुमानवेन । अस्यां उपासनायां पराकाष्ठां च गतायाम्, उपासकस्य मुखमंडलात्, यथा उक्तिभ्यः कृतिभ्यः च भगवत्प्रसादः अखंडम् आविर्भवति, यथा निशायां प्रकोष्ठस्थदीपकिरणाः वातायनात् द्वारकपाटच्छिद्रेभ्यश्च ।

दुःखविमोचनं विजयप्राप्ति च कामयते प्रत्येकः मानव. । आबाल्याद् तदर्थमेव तस्य प्रयत्नः दृष्टिपथम् एति । क्षुधया व्याकुल, कीटकेन दष्ट', वा धावने पतित. बालः आक्रंदति । रोदनात् सः विरमति दुःखपरिहारानन्तरमेव–न तावत्कालपर्यंतम् । विजये च स्वाभाविकी प्रवृत्तिः क्रीडायां बालकस्यापि ।

अस्मिन् सूक्ते (कांड १६ सूक्त १ पृ०२८७) विजयप्राप्त्यर्थं मानवेन प्रत्यह कर्तव्यः सत्संकल्पः ग्रथितः ।

जितमस्माकम्– विजयोऽस्तु अस्माकम् ।
उद्भिन्नमस्माकम्– अभ्युदयोऽस्तु अस्माकम् ।
ऋतमस्माकम्– वर्धतां सत्यमस्माकम् ।
तेजोऽस्माकम्– वर्धतां तेजोऽस्माकम् ।
ब्रह्मास्माकम्– वर्धतां ज्ञानम् अस्माकम् ।
स्वरस्माकम्– वर्धताम् आत्मप्रकाशः अस्माकम् ।
यज्ञोऽस्माकम्– सफलीभवतु यज्ञकर्म अस्माकम् ।
पशवोऽस्माकम्– गावः वृषभाः महिष्यः, अजाः अश्वाः इत्यादिपशवः अलंकुर्वंतु अस्मद्गृहम् । गोमहिष्यजाभिः

समृद्धिरस्तु दुग्ध-दधि-नवनीतादि-
कानां पुष्टिप्रदपदार्थानाम् ।
वृषभैः कृषिः सफलीभवतु ।
अश्वैः शत्रुपराजय संपद्यताम् ।
वृषभाश्वाः यात्रायै उपयुक्ताः
भवंतु ।

वीराः अस्माकम्– गृहिण्यः वीरप्रसवाः भवंतु ।

तस्मादमुं प्रजां निर्भजामः–कृतापराधं शत्रुं
अभिद्रवामः ।

अमुं अमुष्यायण अमुष्याः पुत्रमसौ य –शत्रोः
पुत्रोऽपि शत्रुः अस्माकम्–यावत् अन्यथा
प्रतीतिः तद्विषये न अवाप्ता ।

सः प्राह्याः पाशान् मा मोचि– सः रोगपाशात्
निर्मुक्तः मा भवतु ।

तस्येदं वर्चः तेज. प्राणं आयुः निवेष्टयामि–तस्य
(शत्रोः) तेजः बलं, प्राणान् आयुश्च
सर्वतः आक्रम्य परिवेष्टे ।

इदं एनं अधराञ्चं पादयामि । तं बलसर्वस्वेन
निपातयामि–भूमिसात् करोमि ।

अत्र पाठकमनसि कापि आशंका उद्भवेत् । 'संकल्पमात्रेण कथं विजयप्राप्तिः संभवेदिति' । संकल्पानुसारं भाषणं मानवः प्रायेण करोति । नैकवारम् उक्तस्य अनुसारं च आचरितुं सः अंतः-प्रेर्यते । एवं संकल्पः कालेन सफलीभवति । 'तन्मे मनः शिवसंकल्पमस्तु' इत्यपि श्रुतिवचनम् ।

'तथास्तु' 'तथास्तु' इति नित्यम् अदृश्यरूपेण संचरंत्यः देवताः वदंति अतः नित्यं शुभं भाषणं कर्तव्यम् इति गुरुजनाः सदैव बोधयंति । अतः देवतानाम् आशीर्वादैः अस्मत्संकल्पसिद्धिः सत्वरं निर्विघ्नं च स्यात् ।

उज्ज्वलसंकल्पेन मनोधैर्यं रक्ष्यते विपत्काले इत्यपि महान् लाभः । आधिभौतिकोत्कर्षप्रवणैः–अनध्यात्मवादिभिरपि–आंग्लैः द्वितीये महायुद्धे विजये संशयिते, स्वबांधवानां तथा सैनिकानामपि मनोधैर्यरक्षणाय, V for Victory इति पत्र-व्यवहारे, भित्तिपत्रकेषु, प्रासादेषु तथा चित्र-गृहेषु लोकानां दृष्टिपथं सर्वत्र सर्वकाल च यथा आगच्छेत् तथा प्रदर्शितम् । ईदृक्–प्रचारेण सार्धं शत्रुपराजयाय सामर्थ्यसर्वस्वं युक्तिप्रयुक्ति-भिः सह तैः अवश्यं उपयोजितम् । परम् अयं विजयप्रचारोऽपि विजयस्य अंशतः साहाय्यं अकरोत् इति स्वीकर्तव्यमेव ।

रणांगणेऽस्मिञ्जगतो विशाले,
च्छत्रेऽम्बरस्यापि मुहूर्तवासे ।
मा मूकमेषा इव चोदिताभूर्
वीरस्तु धीरो युधि जीवनस्य ।।

इति प्रख्यात–आंग्लकवेः (LongFellow) तेजस्विसंदेशः PSAM OF LIFE नाम–कवि-तायाम् । अद्यतनकाले तु आप्रभातं जीवन-संग्रामः प्रारभ्यते यावच्छय्याश्रय निशायाम् । केंद्राद् दुग्धानयने, पुरपालिकाया याने(Bus) वा स्थानिक–लोहमार्गयाने (Subrban train) प्रवेशसंपादने सस्य-शर्करादिकस्य सर्वकारमान्या-पणाद् अवाप्तौ, सर्वत्र संग्रामप्रसंगः उद्भवति इति सर्वे अनुभवंति प्रत्यहम् ।

संग्रामः यथा बहिस्तथा मनसि अपि प्रचलति

अहोरात्रं सदसत्प्रवृत्तिमध्ये । अतः तत्रापि विजयः अवश्यं संपादयितव्यः 'अभ्यासेन वैराग्येण' च मनोनिगृह्य 'जितं जगत् केन मनो हि येन' अनेन सुभाषितेन मनोजयः प्रथमं अवाप्तव्यः इति स्पष्टं भवति ।

एवं प्रभाते कृतज्ञतापूर्वकस्मरणेन देवताः स्तोतव्याः, व्यवहारासक्तं बहिर्मुखं मनः लब्धेऽवकाशे अन्तर्मुखं कर्तव्यम्, आत्मना सार्धं अस्य जगतः निर्माता कः इति चिंतनेन मृगयितव्यः, सः प्रयत्नैः अभिज्ञातव्यः सर्वस्वार्पणपूर्वकं च उपासितव्यः, तथा दुःखविमुक्त्यै बहिरन्तश्च विजयसम्पादनाय सत्संकल्पः प्रत्यहं कर्त्तव्यः, ततश्च इहामुत्र कल्याणं वत्सभूतेन मानवेन अधिगंतव्यम् इति विविधोपदेशैः बोधयन्त्याः श्रुतिमातुः वात्सल्यं प्रतीयते । सा प्रणिपातपुरःसरम् एवमेव प्रार्थ्यते—
त्वयाकृष्टं भाग्याच्छ्रुतिजननि ! मे मानसमिदं
तथा भूयः सेवाऽऽद्रियत च यथाबुद्धि विहिता ।
अखण्डं सेवां ते, निरलसतया मे स्मयतो
न चान्यत्रासक्तं भवतु सफलं भाविजननम् ॥

—o—

य ईं चिकेत गुहा भवन्तमा यः ससाद धारामृतस्य ।
वि ये चृतन्त्यृता सपन्त आदिद्वसूनि प्र ववाचास्मै ॥
( ऋ० १.६.७४ )

जो कोई जब कि वह गुप्त गुहा में होता है तब उसे देख लेता है, जिसने सत्य की धारा को प्राप्त किया है, जो लोग सत्य की वस्तुओं का स्पर्श करते हैं और उसे प्रदीप्त करते हैं, तभी और ऐसे मनुष्यों के लिये ही वह ऐश्वर्य के विषय में वचन देता है ।

पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूहरश्मीन् समूह ।
तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषः सोहमस्मि ॥
( ईश—१६ )

हे प्रतिपालक, एक-मेव ऋषि, विधाता, हे प्रकाशदाता सूर्य, जीवों के शक्तिशाली स्रष्टा, अपनी किरणों को, प्रकाश को इकट्ठा करो जो यहां वहां विद्यमान है, तेरा वह तेजस्वी स्वरूप जो सब स्वरूपों में धन्यतम स्वरूप है, मैं तुझमें ही देखता हूं । वह पुरुष जो यहां-वहां विद्यमान है मै ही हूं ।

# मरुद्गणः

श्री निगम शर्मा, गुरुकुल कांगड़ी

गीतिकाव्यस्य मूलस्रोत स्थानम् ऋग्वेदे बहुत्र सूक्तेषु दृश्यते । तत्र मरुत्सूक्तं वीराख्यानमिव नितरामानन्दमुद्भावयति । एतेषां कदली-दललीलया क्वचिच्चलनं क्वचिच्च क्रमादाक्रमणं मनो मोहयति । नियमपूर्वकमुषा यथाऽऽगत्य वेदवक्तारमृषिं नियमबद्धतां प्रति प्रोत्साहयति, नियमयति, च स्वेच्छयाऽऽत्मानं तथैव मरुद्गणभयावहगर्जना सावधानतां प्रति दत्तचक्षुष्कं करोति । वायोः सूर्यस्य उषसो मरुद्गणस्य या यात्रा सैव मानवनिरन्तरयात्राप्रसंगे बीजम् । जगदुपद्रवेषु विध्वंसेषु वा जगतः सज्जाशोध-प्रक्रिया वा दरीदृश्यते । रिक्तमतयो यतयः स्फूर्ति तत्परतां वा विद्युतो निर्झरिणीकलकले च दृष्टवन्तः । प्रत्यक्षतो द्वेषः परोक्ष प्रति प्रेमापि सैवोपनिषत् ।

क्रीडाकारिणा मरुता कार्यकलापे मानव-समाजस्य खेलमहत्त्व द्रष्टुं शक्यम् । अत्रैव सत्त्वरता सुन्दरता वापि चोच्छ्वसिति । पवित्रता-स्वच्छता-सौन्दर्यानुभूतिः, दैवी-भावना प्रति श्रद्धा चात्र जाता । उत्तमं स्वस्थं पुष्टं विशालं शक्तिसम्पन्नं च शरीरं राष्ट्रं च मानवकामनायामवतीर्णम् । तस्य चार्गणितानि रूपाणि परिगणितानि । समानरूपा मरुतः समानानि हृदयानि गणवेषाः समाना व्यवहाराः स्तराश्च यथा जायेरंस्तथा मानवचरित्रे विशिष्टा प्रज्ञा सपुलकं कुन्दकलीव विकसिता ।

सत्त्वोत्कृष्टाऽऽतंकपूर्णा वा दृष्टि मरुतां याने दृश्यते । वीरो यदा स्वमाविर्भावयति तस्य सा उन्मादावस्था, सज्जाभावना, अदम्योत्साहप्रदर्शनं धीरोद्धता गतिर्वज्रबाहुताऽगाधसत्त्वता, मित्रस्य समवेदना, शिशोर्निष्पापलोचने, शिशुं प्रति पितुरुत्सुकता, सिंहस्य गर्जना वीरार्थमाह्वानम्, महान्तः शिलोच्चयाः, एतेषामपि भञ्जका मरुतः; एतत्सर्वमादाय रुचिरया पदावल्या ऋग्वेदे मरुत्सूक्तविषये सुधासिक्तानि सूक्तानि समुल्लसन्ति ।

मरुतः समानबन्धव. सुन्दराकृतयो युवानः सतततरुणा कृतधियश्च । एतेषां पुष्टिं सौन्दर्यं च निभाल्य वक्तुमुचितम्—कदापि काले 'मृड' धातु. कान्तौ वर्तते, प्राणत्यागे साम्प्रतं पाणिनि. स्मरति मरणे मारणे वा तत्परा अतो मरुतो भवन्ति । परं मरुत्सूक्तेषु बहवो मंत्रास्तेषां सौन्दर्य-साजसज्जा-भूषणादिविषयेऽभिदधति, अतः प्रतीयते 'मृड' धातुः कदापि कान्तावपि स्याद्, यतो निष्पन्नो मारशब्दः साम्प्रतमपि सौन्दर्यार्थबोधके कामदेवे-वर्तते निघण्टौ च स्वर्णनाम प्रसङ्गे१ रूपसौन्दर्य प्रसङ्गे२ च मरुच्छब्द. समाम्नायते ।

मर्या इव श्रियसे चेतथा नरः, ऋ. ५ ५९. ३; वरा इव ५ ६०.४ । धनवन्तो युवान इवैते यथोत्सवेषु प्रयान्ति३ । उपहारैस्तरुणान् मादयन्ति४ ये वनितां कामयन्ते । युद्धगान प्रियमेषाम्५ द्रष्टारः स्वर्गस्य कीर्तश्च६ । एतेषामंसभागे भाग्यसाधनान्यस्त्राणि, वक्षः प्रदेशे कवचा नितरां शोभन्ते—

> अंसेष्वा मरुतः खादयो वो
> वक्षःसु रुक्मा उपशिश्रियाणाः ।
> वि विद्युतो न वृष्टिभी रुचाना
> अनुस्वधामायुधैर्यच्छमानाः ॥
> ७ ५६. १३ ।

१– १.२ ।
२– ३.७ ।
३– ७.५६.१६ ।
४– १०.७८.४ ।
५– १.८५.८ ।
६– १०.७७.३ ।

सदैवेतेऽग्रेसरा निरातङ्काश्च१। रणोत्साहे निमग्ना विजेतारो युक्ता अपराजिताश्च२। दृढतरवासितमनसां सुमनसामिवामीषां पुंसां केलिक्रियां निभाल्य मानसोल्लासे सोमेश्वरः कृतधिया कौतुकवतां साहसिना तेज. पारेगिरमुत्कर्षयति३। भुवनेश्वरमन्दिरे च तथाभूतानि भित्तौ केलिरसिकानि चेतोहराणि चित्राणि दृश्यन्ते। अन्यत्रापि मन्दिरेषु गुहाकन्दरेष्वपि तथाविधानि आलेख्यगतानि चित्राणि मरुता क्रीडापरम्पराविषये दत्तसंकेतानि। क्रीडं वः शर्धः४, प्रशंसा गोष्वघ्न्य क्रीडम्५, ते क्रीडयो धुनयो भ्राजदृष्टय.६ उपक्रीडन्ति क्रीडा विदथेषु घृष्वयः७। एभि र्मर्त्वै. स्पष्टं खल्वेते घर्षणशीलाः क्रीडासु कर्म, कर्मसु च क्रीडामनायासेनैव समाचरन्ति। न कर्मभारैः खिन्नतामुद्विग्नतां वाऽनुभवन्ति। मानवजीवने मनोरंजनस्य विशिष्टं स्थानं मनोरंजनमपि सकौतुकं बुद्धिगर्भं च स्यादिति मरुतां चेष्टा दृष्टिश्च।

शत्रुध्वंसनप्रसगे तु मरुत एव पारगामिनो गुरव.। मदन्ति वीरा विदथेषु घृष्वय,८ प्रच्यावयन्तो अच्युता चिदोजसा९ न हि वः शत्रुर्विविदे,१० जनां अचुच्यवीतन गिरीरचुच्यवीतन११ स्थिरा चिन्नमयिष्णव:,१ एतेषु मन्त्रेषु शत्रु प्रति सर्वथैवोचितव्यवसायबुद्धयो मरुतः, येषां गतागतिं शत्रु र्ज्ञातु न शक्नोति क्वैते कुत एते साधितवेषाः प्रसाधितकेशा अवतरन्ति। येषां भुजबन्धे विजयोल्लासः सदैव, अस्मादेव हेतोरिन्द्रो मरुत्वान् इति पदर गृह्णन् नितरां मोदमावहति। ये शुभ्राघोरवर्पसः सुक्षत्रासो रिशादसः३, य ईङ्खयन्ति पर्वतान् तिर समुद्रमर्णवम्४ इत्यादि स्थलेषु— मरुता या ओजोमयी सर्वाङ्गमनोहरा रूपपरम्परा दृश्यते ता मनोगोचरीकृत्य कस्य रहस्यवेदिनो मानवसभासदस्यस्य हृदय न परितुष्यति ?

यादृशा. सोत्साहा विस्मयैकभूमयो मरुतस्तथैवैतेषामश्वा:, तद्यथा–स्थिरा वः सन्तु नेमयो रथा अश्वास एषाम्। सुसंस्कृता अभीशवः ॥५

अश्वै हिरण्यपाणिभिः६, आ श्येनासो न पक्षिणः७ आरुणीषु तविषीरयुग्ध्वम्८, आ वो वहन्तु सप्तयो रघुष्यदः९ शुभे क यान्ति रथतूर्भिरश्वै.,१० उक्षन्ते अश्वा अत्या इवाजिषु.११ एतेषु स्थलेषु मरुता सन्नद्धता विदग्धता च निभाल्य वीरतापूर्णस्य तेजस आलोकरेखा मानसक्षितिजे समुल्लासमातनोति।

तत्र के मरुत इति विचारपरम्परायां यास्क. कथयति 'मरुतः प्रथमगामिनो भवन्ति। मरुतो मित-

१– १०.७८.३।
२– ५.५९.५।
३– मा०उ०४–विंशति ४।
४– ऋ. १.३७.१।
५– १.३७.५।
६– १.८७.३।
७– १.१६६.२।
८– १.८५.१।
९– १.८५.४।
१०– १.३९.४।
११– १.३७.१२।

१– ८.२०.१।
२– १.२३.७।
३– १ १९.५।
४– १.१९.७।
५– १.३८.१२।
६– ८.७.२७।
७– ८.२०.१०।
८– १.६४.७।
९– १.८५.६।
१०– १.८८.२।
११– २.३४.३।

राविणो वा मितरोचिनो वा महद् ब्रवन्तीति वा१। अन्यत्र खल्वपि मरुद्गणविषये भूयान् महीयांश्च विचारक्रमो दृश्यते । तद्यथा—इन्द्रस्य वै मरुतः क्रीडिनः२, मरुतो ह वै क्रीडिनो वृत्रं हनिष्यन्त-मिन्द्रम् आगत तमभित परिचिक्रीडु र्महयन्त ।३ मरुतो वै वर्षस्येशते४, आपो वै मरुत५ प्राणा वै मारुता६, सप्त हि मरुतो गणा ७, विशो मरुत८, कीनाशा आसन मरुत९, पशवो वै मरुतः,१० अन्नं वै मरुत११ मरुतो गणाना पतय१२, मरुतो रश्मय.१३ ।

एतत्सर्वं निभाल्य 'यद् यद् विभूतिमत्सत्त्वमिति विभोर्वाक्यमप्यत्र संगच्छते ।

मरुद्गणस्वरूपस्वभाववर्णनप्रसंगे ऋग्वेदे या सत्त्वोद्रिक्ता प्रज्ञा समुत्कर्षमावहति तस्या एव कोऽपि मनोरमश्चमत्कार कवीना रसनिर्भर-प्रबन्धेषु नखशिखवर्णनप्रस्तावे समुल्लसति । एते राजान इव दीप्तसदर्शना. प्रतित्रपुर्भाग चालंकारै-र्भूषयन्ति । एतेनामीषा रचनासौन्दर्यं प्रस्फुटति पूजिता विभूषिता नितान्तरमणीया भीषणा च रूपसम्पन् नेत्रातिथ्य व्रजति ।

वक्ष सु रुक्मान्१, तनूषु शुभ्रा दधिरे विरु-क्मत.२ राजान इव त्वेषसदृशो नर.३, कशा हस्तेषु४, रुक्मासो अधिबाहुषु५, उग्रबाहव६ मरुतो वीडुपाणिभि७, पत्सु खादय.८, स्कन्धेषु ऋष्टय.९, असेषु खादय.१०, शीर्षसु नृम्णा११, शिप्रा. शीर्षन् हिरण्ययी.१२ हिरण्यशिप्रा १३ ।

एतेन मरुतां शरीरावयवा. सचमत्कार वर्णिता दरीदृश्यन्ते । एते खलु विद्युद्वाहवो हिरण्यशिरस्का. शुभ्रा शोभन्ते—

विद्युद्धस्ता अभिद्यवः शिप्राः शीर्षन् हिरण्ययी ।
शुभ्रा व्यञ्जत श्रिये ॥ ८.७.२५ ।

एतान् मन्त्रानभिनिपीयानुभूयते हि एते मरुत एकस्मिन् देवसदने Barrack निवसन्ति । प्रयाण-मभिसमीक्ष्य रूपशालिन्यस्तरुण्य इवात्मान भूष-यन्ति । अलकारैरात्मानं दीपयन्ति । वस्त्राण्या-युधान्यलंकाराश्च शुद्धानि तीक्ष्णानि कान्तिमन्ति च कुर्वन्ति । सङ्घं निर्माय यात्रां कुर्वन्ति । समूह-परम्परया प्रहारान् आक्रमणानि चाचरन्ति । सर्वे तरुणाः समा स्निग्धा ऐश्वर्येष्यया युक्ता. सन्तः प्रेक्षकसमाजे तृप्ति भीति च जनयन्ति । एतेषा

---

१– निरु० ११.२.१ ।
२– गो० ब्रा० १.२३ ।
३– श० ब्रा० २.५ ३ २० ।
४– श० ब्रा० ९.१ २.५ ।
५– ऐ० ब्रा० ६ ३० ।
६– श० ब्रा० २.३.१.७ ।
७– श० ब्रा० ५.४.३.१७ ।
८– २.५.२.६ ।
९– तै.ब्रा. २.४.८.७ ।
१०– ऐ.ब्रा. ३.१९ ।
११– तै. १.७.३.५ ।
१२– ३.११.४.२ ।
१३– ताण्ड्य. १४.१२.९ ।

१– १.६४.४ ।
२– १.८५ ३ ।
३– १.८५.८ ।
४– १.३७.३ ।
५– ८.२० ११ ।
६– ८.२०.१२ ।
७– १.३८.११ ।
८– ५.५४.११ ।
९– १.६४.४ ।
१०– ७.५६.१३ ।
११– ५.५७.६ ।
१२– ८.७.२५ ।
१३– २.३४.३ ।

शरीराण्यपि खलु भव्यानि, दीप्तानि सुपुष्टानि निष्पापानि निरुपद्रवाणि च ।

एते मरुतः खलु नानावर्णायाः पृश्नेः पुत्राः गोमातरो वा१ एते स्वायतबलाः,२ अज्येष्ठा अकनिष्ठाः सर्वे, सौभाग्यवन्तो भ्रातरः३ युवा पिता स्वपा रुद्र एषाम्, सर्वे शोभनजन्मानः शान्तशब्दवो-दूरेदृशश्च४। एते द्रष्टारः स्वर्गस्य कीर्तेश्च५। अवकाशकाले मनोरञ्जनं कुर्वन्ति मुदः प्रमुदश्च कल्पयन्ति६ । बाला इवैते क्रीडा प्रति अतीव मनो ददति । सिंहा इव गर्जन्ति७, दुर्मदा गजा इव चलन्ति८ भग्नैर्वृक्षै र्ज्ञायतेऽयमेषां निर्गमन-मार्गः, सन्नद्धाभिस्तत्पराभि र्वडवाभिः सहैवैते प्रादुर्भवन्ति९, शक्तिशालिनोऽश्वा इव धावन्ति१०। भयावहा वन्यजन्तव इवैतै साहसिन.११ । दर्पवन्तो वृषभा इव सुन्दराः स्वच्छा मोहकाश्च१२ असिद्धा वृषभा इव स्फूर्तिमत्त स्कन्धे हस्तमपि न सहन्ते१३। कौशलशिक्षा व्यवस्था वाऽमीषा नैव शक्यते । समन्तभद्रा वृषभा इव सर्वे शोभना. सपुलका नयनाह्लादकाश्च१४ । गोस्नेह इवायाचितः प्रेमपूरो मरुद्भ्यो लभते१ । मरुता प्रिया विद्युत् स्निग्धं मेघं गत्वा पुलकिता भवति यथा धेनुर्वत्स गत्वा-ऽऽनन्दं लभते ।२ मरुतो गगने श्येना इवोत्पतन्ति परस्पर तिरयन्त इव ।३ मनोहरगत्या हंसा इव च भूमाववतरन्ति४ । स्वकीय दीप्तदर्शनं तेजः प्रसारयन्ति यथा खगकुल स्वपतवम्५। एते विमल-विपुलमतय सपुलका शीलशीतला विशालाश्च जल-सेकं कुर्वन्त स्वरथेन प्रचलन्ति६ । यथा ताराभि-र्नील गगनं परिचयपथमवतरति तथैवालंकारै-र्मरुन्मण्डलम्७ । तारकालोके यथा प्रभातवेला-नि श्वासभूषितोऽन्धकारो दीप्तो भवति तथैवैते स्वर्णालंकारे। सूर्य इव तेजस्विन ८, सूर्यस्य चक्षुरिव निष्कलका ९, सूर्यस्य किरणा इव दीप्तिमन्त १०, सूर्यस्य प्रभामण्डलमिव मरुतां महत्त्व ज्ञातु परीक्षितु च शक्यते११ । उपासक-समीपे मरुत शोभां समृद्धि चाहरन्ति यथासौ सामान्ये विशेष इव प्रकाशावृतशरीर सिद्धि गच्छेत् ।१२ उपासकाय तथाविधं धनकोषं ते धनिनोऽर्पयन्ति यथा गगनस्य सविधेऽक्षीण नक्षत्र-लक्ष्मीलक्ष्म विद्यते ।१३ एते सूर्य इव पवित्रतमा-

१– १.८५.३ ।
२– १.८५.७ ।
३– ५.६०.५ ।
४– १.१६६.११ ।
५– १०.७७.३ ।
६– ७.५९.७ ।
७– १.६४.८ ।
८– १.६४.७ ।
९– १.८५.१ ।
१०– १०.७८.५ ।
११– २.३४.१ ।
१२– १.१६८.२ ।
१३– ५.५६.४ ।
१४– ५.५९.३ ।

१– २.३४.८ ।
२– १ ३८.८ ।
३– १.१६५.२ ।
४– १.८८.१ ।
५– १.१६६.१० ।
६– ५.५३.५ ।
७– १.१६६.११ ।
८– ५.६१.१२ ।
९– ५.५९.३ ।
१०– ५.५५.३ ।
११– ५.५४.४ ।
१२– ५.५४.१५ ।
१३– ५.५४.१३ ।

विश्व च पुनन्ति१ ।

एत निर्मलप्रज्ञानवन्त २, शोभनजिह्वा ३, कान्तकर्माण कवय ४, सुमतिमन्त ५, मित्रनन्दना ६, भैषज्यविज्ञा ७, छिन्न-भिन्न वाऽङ्ग प्रपूरयन्ति, योधयन्ति शाधयन्ति च८, अन्नदानेन च वर्धयन्ति९, गोपालका एत१०, गा मातरमिव सेवन्ते११ ।

एषा स्नेहपरम्परा मनाहारिणी । य रक्षन्ति स रक्षितोऽमीषा कृपया रक्षका भवति१२ । नैषा धनक्षयोऽस्ति ।१३ पवित्रतमो खल्वमीषा मरुता गण १४ । एने सदैव मानवं सह सङ्गतिमिच्छन्ति हितैषिणश्च१५ । सदैव शुभे कर्मणि युञ्जन्ति१६, स्वकर्मणा, ऐश्वर्येण धीतया मत्या मनीषया च महान्त खलु१७ । हीनभावनारहिता हिरण्यरथा सुरथा सुखसम्पन्ना एते मरुत । प्रायेण पर्वतेष्वेते कृतनिवासा १८ । अनुशासन प्रियमेषाम्१९।

१- १ ६४ २ ।
२- १ ३९ ६ ।
३- १ १६६ ११ ।
४- ५ ५७ ८ ।
५- १ १६६ ६ ।
६- ८ ७ ३१ ।
७- ८ २० २३ ।
८- ८.२० २६ ।
९- ५.५४ २ ।
१०- १.३८ २ ।
११- ५.५२.१६ ।
१२- १.८६.१ ।
१३- २.३४.४ ।
१४- १.६ ८ ।
१५- १ ६४.९ ।
१६- १ ८७.३ ।
१७- ५ २२.२ ।
१८- ८.७.१ ।
१९- ८.७ २३ ।

अमृतमय स्वराज्यसुख लभन्ते१ । वीणावादने कुशला खलु मरुत । धमन्ता वाण मरुत सुदानव २, एषा स्वरै वीणा सम्यगभिव्यज्यते३, एकतो मधुरा कोमलस्वरा वीणा सुकुमारभावममीषा प्रबोधयति अन्यतश्च सुधन्वान इषमन्तो निषङ्गिण ४ इति वीराणा वज्रवाहुता तया च धैर्यैकधनाना वीरश्रियो लावण्य समुल्लसति ।

इत्थ मरुद्गणगानप्रसगे भगवता ऋग्वेदेन या रूपनिष्ठा निर्धारिता या वा प्रेरणादायिनी वीरसम्पदुद्भाविता, ता स्मरन्त सन्त कालिदासस्य सूक्तिपरिस्पदे सहसैव चेतस्यवतारयन्ति । स खलु दिलीप --

भीमकान्तैर्नृपगुणै स बभूवोपजीविनाम् ।
अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णव ॥
--रघुवंशे १ १६ ।

मरुत शिरस्त्राण धारयन्ति । कौषेयमुष्णीषमपि बध्नन्ति । सर्वेषा गणवेष समान सुन्दरो भव्यश्च । नानाविधान्यायुधानि गृह्णन्ति अश्वा अमीषा साधिता सुशिक्षिताश्च । क्वचिद् रुरवोऽपि वाहनत्वेन योजिता । रथाश्चक्रहीना स्थले, गगने, पर्वते, जले च सर्वत्रैव सचरन्ति । शिल्पविद्यानिष्णाता ऋभव खलु मनुजधर्माण एवासन् पर कौशलमुग्धदेवजनकृपया देवराष्ट्रनागरिका सजाता । एवमेव अश्विनौ भिषजौ मानवमात्रसारौ च्यवनकृपातो देवनागरौ सजातौ । मरुत खल्वपि कृषिकर्मणि खाद्यपदार्थोत्पादने लब्धकीर्तयो गोपालकाश्च । मातृभूमि गा प्रति च मातृतुल्या प्रीति कुर्वन्ति । अत एव दानदाक्षिण्यपराक्रमविशेषवैभवादेते देवराष्ट्रस्य नागरिका सम्पन्ना । रुद्रपुत्रा इन्द्रस्यानुयायिनो वृत्रवधे च वज्रवाहोरिन्द्रस्य सदैव युवान सैनिका ।

मरुद्भिरिन्द्र सख्य ते अस्तु । ऋ ८.९६.७

१- ५.५८ १ ।
२- १.८५.१० ।
३- ८.२०.८ ।
४- ५.५७.२ ।

# वेदगौरवं-अनादिनिधनलक्षणम्

श्रीमत्परमहंसपरिव्राजकाचार्य-श्रोत्रिय-ब्रह्मनिष्ठ-महामण्डलेश्वर स्वामी महेश्वरानन्द जी महाराजः

**ओ३म् नम ऋषिभ्यो मन्त्रकृद्भ्यो,**
**मन्त्रविद्भ्यो मन्त्रपतिभ्यः ।**
**मा माम् ऋषयो मन्त्रकृतो,**
**मन्त्रविदः प्रादुर्दैवी वाचमुद्यासम् ।।**
**वाचं देवा उपजीवन्ति विश्वे,**
**वाचं गन्धर्वाः पशवो मनुष्याः ।**
**वाचीमा विश्वा भुवनान्यर्पिता**
**सा नो हवं जुषतामिन्द्रपत्नी ।।**
( यजुर्वेदीयमैत्रायणी-सहिता )

मन्त्रकृद्भ्य = मन्त्रद्रष्टृभ्यः, शिष्येभ्यो मन्त्रोपदेशकर्तृभ्यो वा न तु मन्त्रनिर्मातृभ्य । यथा स्वर्णकारलोहकारप्रभृतयो न हि स्वर्णादि-निर्माण कुर्वन्ति, किन्तु पूर्वमवस्थितस्य तस्य रूपान्तरमाभूषणाद्यात्मकमेव विदधति । अत एव कृत्कारशब्दौ तत्तत्पदार्थाना रूपान्तरद्वारा उपयोग-कर्तृबोधकौ स्त, न तु तत्पदार्थनिर्मातृज्ञापकौ । तथा प्रकृतेऽपि प्रत्येतव्यम् । नन्वेव रघुवंशकार-कौमुदीकारेत्यादौ का गतिः ? इति चेत् तत्रापि कालीदासीयरघुवंशान्तर्गत 'वागर्थाविवसम्पृक्तावि'-त्यादिश्लोकान्तर्गतानि यानि पदानि सन्ति, तानि न कालिदासेनाभिनवानि रचितानि किन्तु तानि तत प्रथममप्यनादिकालात्सर्वैर्व्यवह्रियमाणान्यासन् । तत्र कालिदासेन तेषां स्वाभिप्रेतार्थबोधकानां केषा-ञ्चित्पदाना क्रमविशेषलक्षणं रूपान्तर सम्पादि-तम् । तावन्मात्रेणैव तस्य रघुवंशकारत्वव्यवहार-स्समजनि, इत्यवगतिरेव गतिरिति गृहाण । एव-मन्यत्रापि बोध्यम् । अथापि–इयान् विशेषो विज्ञेयो यत् रघुवंशादिघटकपदानामानुपूर्वीलक्षणः क्रम-विशेषः कालिदासेन स्वेच्छया सम्पादित परन्तु वेदघटकपदानां क्रमविशेषो न केनापि सम्पादित इति । तथा चाम्नायते–गोपथब्राह्मणे–**विश्वामित्रः प्रथममपश्यत्, ताम्विश्वामित्रेण दृष्टान्वामदेवोऽसृजत** ।' ( ६।१ ) इति । असृजत=अपश्यत्-तत्तन्मन्त्रोपयोगमकरोद् वेत्यर्थ । यदि मन्त्रद्रष्टार ऋषय एव मन्त्रनिर्मातारस्स्यु , तर्हि मिथो विरुद्ध-समय एकस्यैव कतिपयमन्त्रसमुदायलक्षणस्य सूक्तस्य रचनामिमौ उभौ ऋषी कथ कर्तुं शक्नुयाताम् ? न कथमपि । अत एव ऐतरेयब्राह्मणेऽपि अभिहितम् **एतत् कवयस्सूक्तमपश्यन्** ।' '**गौरवीतिः**'--**एतत्सूक्तमपश्यत्** ।' (३। १६) **तदेतदृषि पश्यन्नुवाच** ।' (६।१) इति । शतपथब्राह्मणेऽपि--**तदेतत्पश्यन्नृषिर्वामदेव** ।' (१४।४।२।२२) इति । तथैव याज्ञिक व्यवहारोऽपि--**मन्त्रकृतो वृणीते यथार्षमन्त्रकृतो वृणीत** ।' (आप. श्रौ २४।५।६) इत्यादौ दृश्यते । सर्वैरेवास्तिकैर्वैदिकैर्याज्ञिकव्यवहार आदर-णीयो वेदार्थाभ्युपगमे, तस्य प्रधानत्वात्, इति । मन्त्रविद्भ्य = मन्त्रार्थज्ञातृभ्य । मन्त्रपतिभ्यः= सम्प्रदायप्रवर्तनद्वारा मन्त्ररक्षकेभ्य । ते मन्त्र-कृतो मन्त्रविद ऋषयो मा= मा प्रति दैवी=देवस्य परमात्मनस्स्वभूतामनादिनिधना वेदलक्षणा वाच= वाणी अह मा उद्यासम्=कदाचिदपि न परित्य-जेयम्, किन्तु सदा विधारयेयम् इत्येव प्राहु.=कथ-यन्ति । इन्द्रस्य=परमेश्वरस्य पत्नी=तदायत्ता-तदीयज्ञानशक्तिविभूतिरूपा सा वेदमयी दिव्या वाणी, न.=अस्माक, हव=तामुद्दिश्य समर्पित श्रद्धामयं हविरादिक जुषता=सेवतामित्यर्थ. जुष-प्रीतिसेवनयो.' स्मरणात् ।

अस्ति खलु विदितमेतत्सर्वेषा यत्किल सनात-नार्यधर्मस्य मूलं सर्वज्ञानप्रसूतिश्च स्वतः प्रमाण प्रमाणमूर्धन्यो भगवान् श्रुतिधन्यो वेद एवेति अत एव विद्यते वेदानामखिलपुरुषार्थसाधनानामुप-योगिता सर्वतोमुखी । अस्माकं यावन्तो धर्ममार्गा-स्सिद्धान्तास्साधनकलापाश्च, यावच्च वाङ्मय साहित्य तावत् सर्वं साक्षाद्वा परम्परया वा वेद-

विहितमेवेति तत्तन्मताभिनिविष्टा पण्डितास्तत्तन्मन्त्राक्षरं प्रदर्शयन्ति। स्मृतिदर्शनेतिहासपुराणतन्त्रादीनां निखिलानामपि शास्त्राणां सर्वत्र सर्वथा वेदानुकूलतयैव प्रामाण्यपरिग्रहं समादरञ्च शिष्टा कुर्वन्ति। यदाहु:—

**श्रुतिस्मृतिपुराणानां विरोधो यत्र दृश्यते।**
**तत्र श्रौतं प्रमाणं स्यात् तयोर्द्वैधे स्मृतिर्वरा॥**
**सर्वथा वेद एवासौ सर्वधर्मप्रमाणकः।**
**तेनाविरुद्धं यत्किञ्चित्तत्प्रमाणं न चान्यथा॥** इति॥

वैदेशिका पण्डिता अपि भतभानिविधविषयकविज्ञानान्वेषणतत्परा वेदानशीलनयत्नतस्तेभ्य एव **'मथ्यमानेभ्यस्सागरेभ्यो रत्नखण्डानीव'** शब्दविद्युद्भूगोलखगोलेतिहाससमाजदर्शनयन्त्रादिविषयाणि विविधानि विज्ञानान्याविष्कुर्वन्तस्तत्र महनीयं गौरवं यशोऽभिवृद्धिञ्चाप्नुवन्ति धराधाम्नि विस्तारयन्ति। इत्येवं वेदानामनितरसामान्यं महत्त्वं स्फुटमेवोन्नतमस्माभिरूहितं भवति। येषां माहात्म्येनैव सम्प्रति स्वदर्शस्वानन्त्यमक्षुण्णाभ्युदयकामाया आर्यजातेमौलिस्समुन्नतोऽवलोक्यते। तथा चाहुस्सर्वाभीष्टार्थप्रतिष्ठितत्वादिलक्षणं वेदमहत्त्वं शिष्टशिरोमणयो भगवन्तो वेदव्यासा महाभारतस्य शान्तिपर्वणि —

**सर्वे विदुर्वेदविदो वेदे सर्वं प्रतिष्ठितम्।**
**वेदे निष्ठा हि सर्वस्य यद्यदस्ति च नास्ति च॥**
(म. भा. शा. २७०।४३) इति।

अपि च ऋगादिलक्षणो वेदो हि परस्य ब्रह्मणश्शब्दात्मकं स्वरूपम्। यश्शब्दे ब्रह्मणि वेदनिष्णातो भवति, स एव परब्रह्माधिगन्तुमर्हति नेतरः। तस्माद् यथा परं ब्रह्म शाश्वतमनादिनिधनं तथा प्रमाणसार्वभौमो वेदोऽपि अनादिनिधनो नित्याऽपौरुषेयश्च। अत एव वेदान्तर्गतानां **'अग्निमीळे पुरोहितम्।' 'इषे त्वा ऊर्जे त्वा'** इत्यादिशब्दानामानुपूर्वी प्रतिकल्पमेकरूपैव विद्यते, न कदापि भिद्यते मात्रयाऽपि, न च व्यत्येति कथञ्चिदपि।

अभिहितञ्च तत्— **शिवादि-ऋषिपर्यन्तास्स्मर्तारोऽस्य न कारकाः।'** इति। अत एवानादिवेदावस्थितशब्दानामभिनवानुपूर्व्यास्सम्पादने भगवतस्सर्वेश्वरस्यापि स्वातन्त्र्यं नास्ति। तत एवोच्यते नास्ति कश्चिद् विश्वेश्वरो भगवानपि वेदकर्ता। अनादिकालतस्सर्वेषु कल्पेषु श्रयत एव स्मर्यते एव च केवलं स तु न केनापि क्रियते—अभिनवो विरच्यते।

अयमेव सिद्धान्तः—**'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै।'** (श्वे० ६।१८) **'अस्य महतो भूतस्य निश्वसितमेतद् यदृग्वेदो यजुर्वेदस्सामवेदोऽथर्वाङ्गिरसः।'** (बृ० ४।५।११) इत्यादिमन्त्रेषु स्पष्टमाविष्क्रियते। सर्वेश्वरस्सर्वज्ञो भगवान् महाप्रलये सम्कारूपेण पूर्वकल्पेष्वपि यादृशानुपूर्वीविशिष्टतयाऽवस्थितान् तानेव वेदान् प्रथमोत्पन्नाय चतुर्मुखाय लोकशिक्षार्थमुपदिशति। **'प्रहिणोति'** इति प्रेषणार्थबोधकं पदमिदं स्पष्टतः परमेश्वरस्य ब्रह्मा पूर्वतोऽवस्थिता एव सन्ति वेदा न त्वभिनवास्तेन निर्मिताः केवलमध्यापकवत् तदुपदेशमात्रस्य कर्ताऽसौ भगवान् इति सूचयति। अन्यथा **'प्रहिणोति'** इत्यस्य स्थाने **'रचयति'** इत्येव पदं प्रयोक्तव्यं भवेत्। न च **'वेदान् निर्माय प्रहिणोति'** इत्यप्यर्थस्सम्भवदिति वाच्यं क्लिष्टकल्पनापत्तेः।

**तस्मै नूनमभिद्यवे वाचा विरूप! नित्यया।**
**वृष्णे चोदस्व सुष्टुतिम्॥** (ऋ० ८।८।७५)।
**अनादिनिधनानित्या वागुत्सृष्टा स्वयम्भुवा।**
**आदौ वेदमयी दिव्या यतस्सर्वाः प्रवृत्तयः॥**
(म. भा. १२।२३३।२४)

हे विरूप! विशिष्टस्वरूप! विद्वन्! यद्वा एतन्नामक महर्षे! नूनं=निश्चयेन, इदानीं वा त्वं तस्मै=लोकवेदप्रसिद्धाय अभिद्यवे=अभिगतदीप्तये सर्वगतप्रकाशस्वरूपाय-व्यापकाय, वृष्णे=वर्षकाय=कर्मफलप्रदाय, भगवते, नित्यया—उत्पत्तिरहितया-नामरूपप्रवाहविच्छेदशून्ययाऽनादि-

निधनया, वाचा=वेदवाण्या, सुष्टुति=प्रियां स्तुति चोदस्व=कुरुष्वेत्यर्थ इत्येवमृषिस्स्वात्मानं ब्रवीति, यजमानो वा होतारं, गुरुर्वा शिष्यम् ।

वेदमय्या वाचो दिव्यत्वञ्चेदमेव पदपौरुषेयत्वेन स्वतः प्रामाण्यं, सर्वार्थविभासकत्वञ्चेति ।

इत्यादि---श्रुतिस्मृतिव्याकोपापत्तेश्च । एव ऋषयोऽपि वेदाना च न कर्तारः, किन्तु परमेश्वरवत् स्मर्तार एवावगन्तव्या. । तथा चाम्नायते--

**'यज्ञेन वाचः पदवीयमायन् तामन्वविन्दन्नृषिषु प्रविष्टाम् ।'** ( ऋ० १०।७१।३ ) अस्यायमर्थः-- यज्ञेन=वैदिकेन शुभकर्मणा स्वान्तश्शुद्धिमापन्नाः, वाचः=वेदस्य सार्थस्य पदवीयं=प्राप्तव्ययोग्यतां, आयन्=प्राप्तवन्तः । तां वेदलक्षणां वाचं ऋषिषु मन्त्रद्रष्टृषु महानुभावेषु, प्रविष्टां=अनुविन्नां-अवस्थिता, न त्वभिनवोत्पन्ना तैर्निर्मितां, अन्वविन्दन्= याज्ञिकाः विदितवन्त इत्यर्थः, प्राप्तवन्त इति यावत् ।

---:०-०:---

## अजमेर में ऋषि मेला दिनांक ५, ६ नवम्बर १६६७

महर्षि दयानन्द सरस्वती के ८४वें निर्वाण-दिवस पर तारीख २६ अक्टूबर से ६ नवम्बर १६६७ तक अजमेर में ऋषि-मेला मनाया जायेगा, जिसमें आर्य विद्वानों के 'महर्षि के जीवन पर 'व 'आर्य समाज के संगठन पर' भाषण होंगे । आर्य जनता से निवेदन है कि इस धार्मिक मेले में अधिक से अधिक संख्या में भाग लेकर मेले को सफल बनावें ।

**श्रीकरण शारदा**
मंत्री
परोपकारिणी सभा, दनानन्द-आश्रम
केसरगंज, अजमेर
(राजस्थान)

# यास्ककालिका विविधा वेदार्थपद्धतयः

श्री धर्मदेवो वेदवाचस्पति

वेदोऽखिलो धर्ममूलमिति नाति रञ्जित वचो भगवतो मनो । वेदा हि भारतीयसभ्यताया सस्कृते धर्मस्य ज्ञानविज्ञानस्य च मूल स्रोत । प्राचीनतमत्वात् ज्ञानविज्ञानाना गहनत्वाच्च भारतीया ऋषयो मनयश्च एतेषामवगाहनाय सुरक्षणाय च विविधानुपायाश्चक्रु वेदागनाम्ना विख्यातान विविधान् ग्रन्थाश्च निममिरे । तेषु प्रधानतममग निरुक्तशास्त्र वर्तते । तत्रादौ निरुक्तशास्त्रस्य यानि प्रयाजनान्युक्तानि तनाप्यस्य वेदागस्य महत्त्व प्रकटीभवति । नानि प्रयोजनानि प्राधान्येन त्रीणि सन्ति--

(१) मन्त्रेष्वर्थप्रत्यय ।
(२) पदविभाग ।
(३) मन्त्राणा दैवतज्ञान च ।

( निरुक्त अ १ । पाद ५,६ )

श्री यास्काचार्यविरचित निरुक्तशास्त्राध्ययनेन प्रतीयते यत् ततोऽपि प्राक्तनात् कालात् निरुक्तविद्या विविधा वेदार्थपद्धतयश्च प्रचलिता आसन् । श्री यास्कमुनिना स्वग्रन्थे चतुर्दशनिरुक्ताचार्याणा नामानि निर्दिष्टानि स्थाने स्थाने च निर्वचनप्रसगे ब्राह्मणवचनान्युद्धृतानि तथैव मन्त्रार्थप्रसगे विविधाना सम्प्रदायानामुल्लेख आलोचन वा कृतमिति । त च प्राधान्येन पञ्च सन्ति–याज्ञिका आख्यानविद ऐतिहासिका , अध्यात्मवादिन , नैरुक्ताश्च । तद् व्यतिरिक्त कुत्रचित् नैदानमत वैयाकरणमतमपि प्रदर्शितम् पर न तयो र्मन्त्रार्थविषये सविशेष स्थानम् । एते पञ्च सम्प्रदाया एव प्राचीनात् कालादद्यावधि अस्माक देशे प्रचलिता सन्ति ।

किं नाम स्वरूपमेतेषा सम्प्रदायाना, कस्मिन् विषये चैतेषा सवादो विसवादो वा यास्कमुनेरित्येव विचारविषयोऽस्माकम् ।

### १ याज्ञिकाना सम्प्रदाय

एष सम्प्रदायो विविधेषु प्रसगेषु निर्दिष्टो दृश्यते । दर्शपौर्णमासादियज्ञेषु विनियागार्यैव मन्त्रा सृष्टा इति सिद्धान्तमाश्रित्यैव मन्त्राणामर्थ देवताना वा स्वरूप स्थिरीकुर्वन्ति एते याज्ञिका ।

**ऋचा त्व पोषमास्ते** प्रभृतिषु मन्त्रेषु अधियज्ञमर्थ स्वीकुर्वाणोऽपि यास्काचार्य विनियोगार्थ मन्त्रा सृष्टा इति सिद्धान्त नागीकराति । अत एव यज्ञविधिमनुसृत्य दवतार्थ निर्णयपद्धति नानुमोदत ।

### २ आख्यान सम्प्रदाय

मन्त्राथव्याख्याप्रसगे पञ्चष वार अस्य सम्प्रदायस्योल्लेखो विहितो यास्काचार्येण । मन्य ऋक्ष स्थाने स्थाने आख्यानशैली विलोक्य अस्य सम्प्रदायस्य प्रादुर्भावो बभूव । यथाह किल **यो जात एव प्रथमो (ऋक् २।१२।१), 'एक सुपर्ण स समुद्र (ऋक् १०।११४।४)** इत्येतयो मन्त्रयो व्याख्याप्रसगे यास्को मुनि –**"ऋषे दृष्टार्थस्य प्रीति र्भवत्याख्यानसयुक्ता ।"** वस्तुत नैषा वास्तविकी कथा, पर वस्तुवर्णने शैलीविशेषएव । बहवो महात्मान बौद्धाना जानकादयो ग्रन्था, वाइबलप्रभतयश्चेमा शैलीमाद्रियमाणा दृश्यन्ते । पर कालक्रमेण आख्यानवादिन एतान्याख्यानानि वास्तविकानि स्वीकर्त्तु प्रवृत्ता ।

एष आख्यानवादश्च शनै शनै ऐतिहासिकसम्प्रदाय जन्म प्रायच्छत । ब्राह्मणग्रन्थानामर्थवादशैली उभयो र्मध्यवर्तिनी शृखला वर्तते । तत्र इन्द्रवृत्रादीना अधिदैवतमर्थ कुर्वताऽपि निरुक्तिसमये भूतकालवाचिनी क्रिया प्रयुक्ता । तद्यथा–**"यद-वृणोत् तद् वृत्रस्य वृत्रत्वम्, यदवर्तत तद्वृत्रस्य वृत्रत्वम्, यदवर्धत तद्वृत्रस्य वृत्रत्वम् ।"**

इम भूतकालक्रियाप्रयोग समीक्ष्य ऐतिहासिका

एतं भूतकालिकी वास्तविकी घटनाममन्यन्त। इति ह–निश्चयेन–ग्रास–बभूव।' इति मन्यमाना विद्वांसः 'ऐतिहासिका' इति सञ्ज्ञामलभन्त। नैरुक्ते स्वेतानि ग्राख्यानानि वस्तुप्रतिपादनशैलीविशेष एव मन्यते, न तु परमार्थेन घटिता घटनाविशेषा।

३. **ऐतिहासिक सम्प्रदायः**

श्रीमता यास्काचार्येण सर्वतो बहुलमस्यैव सम्प्रदायस्योल्लेखो व्यधायि। मन्ये तस्मिन् युगेऽस्य बहुतर. प्रचार ग्रासीत्। निरुक्ते त्रिविधोऽस्योल्लेखः। (क) स्थानत्रये–'**इति नैरुक्ताः, इत्यैतिहासिकाः**' इत्युक्त्वा उभयो सम्प्रदाययो मतमुद्धतम्। (ख) पञ्चसु स्थलेषु–**तत्रेतिहासमाचक्षते**'इत्युक्त्वा ऐतिहासिक मत संक्षिप्योक्तम् (ग) कुत्रचिच्च '**ऐतिहासिका**' '**इतिहास**'–इत्येतयो शब्दयो प्रयोगमविधाय काचित् कथा वर्णिता। ग्रन्ते च 'तदभिवादिन्येषा ऋग्भवति।' इत्येवमैतिहासिकं मत प्रदर्शितम्।

प्रथमे प्रकारे तदितरयोः प्रकारयोश्च भेदद्वयं उपलक्ष्यते। (१) यत्र 'ऐतिहासिकाः' इत्युक्तं तत्र तद् विरोधी नैरुक्तपक्षोऽपि निर्दिष्टः। (२) ग्रथ च एतादृशेषु प्रसंगेषु प्रायेण देवतानामर्थविशेष एव विचार्यते। यत्र पुन 'इतिहासमाचक्षते' केवलं कथा वा वर्ण्यते तत्र निरुक्तपक्षः पृथक् न प्रदर्श्यते, न च कस्याश्चिद् देवताया विचारः। पर कश्चिद् ऋषी राजा वा प्रस्तूयते।

एतेनैतत्तु निश्चप्रचं वक्तुं शक्यते यत् वृत्र-सरण्यू-सरमा-प्रभृतीनां देवासुराणां इतिहासपरा व्याख्या नानुमोदिता श्रीमतो यास्काचार्यस्य। स किल तेषामधिदैवतमर्थमंगीकुरुते। तेषां देवानां संग्रामं जनकपुत्रादिसम्बन्धं वा ग्रौपचारिकं ग्रालंकारिकं वा मन्यते। परं तदतिरिक्ते प्रसंगद्वये नैरुक्तानामभिमतस्यार्थस्य निर्देशाभावादस्ति किल सन्देहावकाशो विदुषां यद् यास्काचार्यो वेदे ऋषीणां राज्ञां वैतिहासिकं वर्णनमूरीकरोति न वेति। परं यदा स मुनिः–'**पुरुषविद्यानित्यत्वात् कर्मसंपत्ति मन्त्रो वेदे**। नि. १।२, "**तद्यदेनान् तपस्यमानान् ब्रह्म स्वयम्भूः अभ्यानर्षत् ते ऋषयोऽभवन्, तदृषीणामृषित्वम्**।" नि. २.११। '**एवमुच्चावचैरभिप्रायै ऋषीणां मन्त्रदृष्टयो भवन्ति**। नि. ७।३" प्रभृतिषु स्थलेषु वेदाना नित्यत्वं ऋषीणां च मन्त्रद्रष्टृत्वमभ्युपगच्छन्नवलोक्यते, तदा यास्कमते देवापि शन्तनु प्रियमध सुदास विश्वामित्र त्रितप्रभृतय. ऐतिहासिकाः पुरुषा. सन्ति इति न विश्वसिति नश्चेत. । ग्रथ चेदमपि चिन्तनीय भवति कस्मात् हेतो खलु यास्काचार्य. एषा व्यक्तिबोधकाना निर्वचन विधत्ते। यतो हि स तावत् जातिवाचकाना संज्ञापदाना (common noun) मेव सर्वत्र निर्वचनमकरोत्,न पुन व्यक्तिवाचकाना शाकपूणिस्थौलष्ठीविप्रभृतीनां पदानाम्। किन्त्वैतेनेदमनुमातु शक्यते यन्निरुच्यमानत्वादेतानि नामानि न व्यक्तिविशेषवाचकानि, परं तदन्तर्निहितभावं गुणं वा प्रकाशयितुः यस्य कस्यचिद् राज्ञो वा ऋषेर्वा बोधकानि सन्ति। मन्ये नेदं यास्कमुनेरभिमतं यत् पुरा कदाचिद् देवापिः शन्तनु. मुद्गलो वा नाम कश्चिद्राजविशेषोऽजायत, प्रत्युत निर्वचननिर्दिष्टैः गुणैरलङ्कृताः समये समयेऽस्मिन् संसारे जायमाना राजान एव वर्ण्यन्ते। ग्रतएव निरुक्तसमुच्चयकर्ता वररुचि. स्कन्दस्वामी चाहतु.—

'**ग्रौपचारिकोऽयं मन्त्रेष्वाख्यानसमयः, नित्यत्वविरोधात्, परमार्थेन तु नित्यपक्ष एवेति नैरुक्तानां सिद्धान्तः**।।' इत्युक्त्वा स्कन्दस्वामी किल ऋष्टिषेण देवापि शन्तनु प्रियमेध भृग्वंगिरस्त्रितप्रभृतीनि पदानि नित्यपक्षे यजमानवाचकानि नित्यपदार्थवाचकानि च व्याख्यातवान् (पृष्ठम् ७७, ७८, १८०, २१०)। तदेव क्वचिद् दुर्गाचार्योऽप्यंगीकरोति। '**विश्वकर्मा विमनाः**···' इति मन्त्रे '**तत्रेतिहासमाचक्षते**' इत्युक्त्वा श्री यास्कः किमपीतिहासं दर्शितवान्। तस्याभिप्रायं दुर्गाचार्य इत्थं

व्याचष्टे—

'तत्रैतस्मिन्नर्थे इतिहासमाचक्षते आत्मविद इतिवृत्तं परकृत्यर्थवादरूपेण । य. कश्चिदाध्यात्मिक आधिदैविक आधिभौतिको वार्थ आख्यायते दिष्ट्युदितावभासनार्थ स इतिहास इत्युच्यते । स पुनरयमितिहास सर्वप्रकारो नित्यम विवक्षितस्वार्थ. तदर्थप्रतिपत्तॄणामुपदेशपरत्वात् ।'

इदमपि सम्भोभवीति यद् यास्केन मुनिनैतेषु स्थलेषु इतिहासशब्दप्रयोग इतिवृत्तपरमकृत्वा अर्थान्तर एव कृतो भवेत् । इतिहास शब्द इतिवृत्तसूचकः सन्नपि प्राचीन सस्कृतसाहित्येऽनेकेष्वर्थेषु प्रयुज्यते स्म । श्रीमता मोनियरविलियम्स महोदय. Sanskrit-English Dictionery नाम ग्रन्थे इतिहासपदस्याधोलिखितानर्थान् दर्शयति—

Talk, legend. tradition, history, traditional account of formed events, heroic history

यथा महाभारते अनेकत्र 'तत्रोदाहरन्ति हेममितिहास पुरातनम्' इत्युक्त्वा पशुपक्षिणां कथा वर्णिता । अत्र किलेतिहासशब्द. काल्पनिककथामात्रपरो नत्वितिवृत्तसूचकः ।

समासत इदमेव वक्तुमिप्यते यत् पुरस्तात् प्रोक्तेषु द्वितीयतृतीयविधेषु प्रसंगेषु ऐतिहासिकमर्थमखण्डयन्नपि यास्काचार्यः तन्निर्वचनव्याजेन तेषां पदानां जातिवाचकत्व दर्शयति, यद्वा पुरुषविशेषस्येतिहासमनुक्त्वा नित्येतिहासं सूचयति ।

इदमपि नाप्रासंगिकं भवेत् यदैतिहासिक सम्प्रदायवादिनो यथा वेदेषु राज्ञामृषीणाञ्चेतिहासं जानन्ति तथैव ते इन्द्रादीना देवतानामपीतिहासं स्वीकुर्वन्ति । इन्द्रदेवस्य सोमपानं, सुगृहे निवास', वृत्रेण सह संग्रामः इत्यादीनि पुरुषविधवर्णनानि तदितिहाससूचकान्येव । तथैव इन्द्रादीनां पितृ-पुत्र-भगिनी-जारादय : सम्बन्धा अपि सन्ति । पुरुषविधा ऐवेते देवाः । इत्यमयमैतिहासिकसम्प्रदायः ग्रीकरोमनदेवानामिव वैदिकदेवानामितिहासपरां व्याख्या ( Mythological or historical retation) करोति ।

### ४. अध्यात्मवादी सम्प्रदायः

अस्य सम्प्रदायस्योल्लेख. सर्वतः प्रथम **'य ई चकार न सो अस्य वेद'** इति मन्त्रव्याख्याया परिव्राजकेति नाम्ना विहितः । तथैव **'चत्वारि वाक् परिमिता पदानि'** मन्त्रव्याख्यानावसरे विविध सम्प्रदायेषु अस्यापि नामोल्लेखो वर्तते । स्वय यास्काचार्योऽपि केषाञ्चिन्मन्त्राणा आधिदैवतमर्थ विधायाध्यात्मपरमपि प्रस्तुतवान् (तद्यथा–**यत्र सुपर्णा.** । नि. ३।१२, **सप्त ऋषयः** । नि. १२।३७, **विश्वकर्मा १०.२६, तिर्यग्विलः १२।३८** ) चतुर्दशाध्याये प्रायेण सर्वे मन्त्रा अध्यात्मपरा एव । यदि नामायमध्यायो यास्ककृतो नापि स्वीक्रियेत तथाप्येभिः प्रसंगैः नातितिरोहितं यद् यास्को मन्त्राणां न केवलमाधिदैवतमेवार्थ स्वीकुरुते, परमध्यात्मपरमपि । अत्रेदमप्यवधेयं यद् अध्यात्मशब्देन ब्रह्मपरोऽर्थो नाभिप्रेतः, परं केनतैत्तरीयबृहदारण्यकादिष्विवात्रापि अध्यामशब्देन शरीरमुच्यते ।

### ५ नैरुक्त सम्प्रदायः

श्री यास्काचार्योऽस्य सम्प्रदायस्य प्रमुख. प्रवक्ता वर्त्तते, न तु प्रवर्तकः । अतिचिरन्तनोऽयं सम्प्रदायः । यास्केन स्वयमपि चतुर्दशाचार्याणां नामग्राहपूर्वक मतमुद्धतम् । वहुत्र च 'इति नैरुक्ताः' इत्युक्त्वा सम्प्रदायान्तरेभ्यो मतभेदो दर्शितः। द्विविधं वैशिष्टचमस्य सम्प्रदायस्य–प्रथमं तावत् सर्वाणि नामानि आख्यातजानि इति सिद्धान्त.। अत एव निर्वचन प्रकारमुल्लिख्योपसंजहार–**'अविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयात् । न त्वेव न निर्ब्रूयात् । न संस्कारमाद्रियेत ।"** द्वितीयं च वैशिष्ट्यं देवतावादविषयकम् वैदिकदेवतानामाधिदैवतरपरं

व्याख्यानम् (Naturalistic Interpretation)। एतदुभयं सम्प्रदायान्तरेभ्यो निरुक्तस्य वैशिष्ट्यं बोधयति ।

**नैरुक्तसम्प्रदायस्य तदितरः विशेषः**

याज्ञिका ऐतिहासिकाश्च तावत् प्रायेण लौकिक-शब्दानिव वैदिकानपि शब्दान् रूढीन् योगरूढीन् वा मन्यन्ते न पुनः सर्वथा यौगिकान्,तेषा पदाना च प्रायेण वाच्यार्थमेव मन्यन्ते । अत एव इन्द्रादीनां पुरुषविधं वर्णनं युद्धादींश्च विलोक्य ग्रीकरोमपौराणिक-देवानिव वैदिकदेवानपि लोकोत्तरशक्तिमत. मनुष्या-निव शुभाशुभकर्तृंश्च मन्यन्ते । नैरुक्ताश्च पुन: अन्यथैव विचारयन्ति । नैरुक्तसमये तु–"**स न मन्ये-तागन्नूनिवार्यान् देवतानाम्** ।" तन्मते त्रयो वाव लोकाः, तिस्र एव च तेषां देवताः । '**अग्निः पृथिवी-स्थानः, वायुर्वेन्द्रो वाऽन्तरिक्षस्थानः, आदित्यो वा द्युस्थानः । तासां महाभाग्याद् एकैकस्या अपि बहूनि नामधेयानि भवन्ति, अपि वा कर्मपृथकत्वात् यथा होताऽध्वर्युर्ब्रह्मोद्गाता-इत्येकस्य सतः** ।। नि. ७।५"

इत्थमेताः सर्वा देवताः प्राकृतिकाः सूर्यादयः पदार्था एव, न तु काश्चिददद्भुताकृतयो अलौकिकाः सत्त्वविशेषाः । केषुचिन्मन्त्रेषु निर्वचनबलेन लक्ष्यार्थ वाऽऽश्रित्यासां देवतानां अध्यात्मपरोऽप्यर्थो विहित.। नैरुक्तसम्मतस्य देवताव्याख्यानस्यागीकारेण अनेकेषा मन्त्राणामुपहासास्पदत्वं, देवानाञ्चाश्लीलता समा-धीयते । तथा चैतान्याख्यानानि औपम्यमेव दर्शयन्ति न वास्तविकं युद्धादिकम् । इन्द्रवृत्रासुरयुद्धवर्णन-मित्थं विशदीकृतं यास्केन—

"**तत् को वृत्रः? मेघ इति नैरुक्ताः, त्वाष्ट्रोऽसुर इत्यैतिहासिकाः अपां च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते, तत्रोपमार्थेन युद्धवर्णा भवन्ति । नि. २।१६**" तथैव स '**स्वसुर्जारः शृणोतु नः**' **ऋक्**. ६.५५.५ ।–इति मन्त्रे स आदित्य एव स्वसुः–स्वभगिन्याः उषसः जारो जरयिता उक्तः । अपरं च–'पिता दुहितुर्गर्भमाधात् । ऋक्. १।१६४।३३। इति मन्त्रेऽपि पितृ दुहितृ शब्दौ न रूढी,परं यौगिकौ। 'पिता पाता पालयिता वा भवति ।' नि. ४.१।। दुहिता दूरे हिता दोग्धेर्वा । नि. ३।४। पालयितृ-त्वात् पर्जन्योऽत्र पिता प्रोक्तः, दूरस्थितत्वाच्च भूमिः दुहिता । नैरुक्तमते नात्र पुरुषविधस्यं देव-विशेषस्य स्वकन्याया गर्भधारणमुक्तम्, प्रत्युत पर्जन्यस्य पृथिव्या वृष्टिजलसेचनमेव वर्णितम् । यद्वा पर्जन्ये पितृत्वस्य भूम्यां च दुहितृत्वस्य व्यपदेश उपचारादेव मन्तव्य , काव्ये तथात्वात् ।

अपरञ्च यास्काचार्योऽधोलिखितामृचमपि नैरुक्तदिशा व्याख्यातवान्—

**अपागूहन्नमृतां मर्त्येभ्यः**
**कृत्वी सवर्णामददुर्विवस्वते ।**
**उताश्विनावभरद् यत्तदासी-**
**दजहादु द्वा मिथुना सरण्यूः।।**
**ऋक्**. १०।१७।२ ।।

तत्रेतिहासमाचक्षते । त्वाष्ट्री सरण्यू विवस्वत आदित्याद् यमौ मिथुनौ जनयाचकार । सा सवर्णा-मन्यां प्रतिनिधायाश्वं रूपं कृत्वा प्रदुद्राव । स दिवस्वानादित्य आश्वमेव रूपं विधाय तामनुसृत्य संबभूव । ततोऽश्विनौ जज्ञाते । सवर्णायां मनुः ।

सेषा कथा सामाजिकं जीवन क्षुद्रतरं दर्शयति, बालानां वा मनोविनोदायालम् । यास्कस्तु नावेति-हासं मन्यते । तन्मते प्रकृतौ नित्यं विलोक्यमाना घटनैवात्र वर्णिता । अस्तंगमिष्यन् सायंकालिक सूर्य एव त्वष्टा । तस्मिन् काले पृथिव्याः तस्य प्रभाऽपि लुप्यते । ततो जायमाना छाया रात्रिर्वाऽत्र त्वाष्ट्री सरण्यूरुक्ता ।

**उत्त दासं कौलितरं बृहतः पर्वतादधि ।**
**अवाहन्निन्द्र शम्बरम् ।। ऋक्**.४।३०।१४

इत्यादिषु मन्त्रेषु शम्बर–वृत्रादयो नासुर-विशेषाः, यान् इन्द्रो जघान, परं मेघ एव तैः शब्दै-रुच्यते, इन्द्रश्च विद्युद्वाचकः । तयो मिश्रीभाव-

कर्मणो यद् वर्षकर्म भवति तदेव युद्धरूपेण वर्ण्यते। तस्मादिदं युद्धवर्णनमालकारिकमेव न तु वास्तविकम्। तथैवेतेषां देवाना हस्तपादादीनामुल्लेखोऽप्यौपचारिक एव न तु वास्तविकः। एतादृशं पुरुषविधं वर्णन तु पाषाणादिजडपदार्थानामपि श्रूयते। तद्यथा–"अभिक्रन्दन्ति हरितेभिरासभि." तथा। "होतुश्चित् पूर्वे हविरद्यमाशत" इति ग्रावस्तुतौ, "सुखं रथं युयुजे सिन्धुरश्विनम्' इति च नदीस्तुतौ।

एवमेव मन्त्रेषु देवताना ये स्वसृदुहितृपितृ जारादयः सम्बन्धा वर्णिता तेऽपि न रूढिवाचका, प्रत्युत यौगिके लाक्षणिके वाऽर्थे प्रयुक्ताः। पितृशब्दो न केवलं देहोत्पादयितुः नाम, पर यः कश्चित् पालनकर्ता पिता भवति। जारशब्दो न केवलमुपपतिवाचकः, परं कस्यापि जरयितुरेव। दुहितृशब्दो न कन्यावाचक एव, पर 'दूरे हिता' इत्यर्थं द्योतयति। नापि स्वसृशब्दः केवलं भगिनीपर. परं 'स्वसरः'–सूर्यो भवति 'स्वसृ' च उषाः।

इत्थमेतेषां यौगिकमर्थं विधाय–'उदीरय पितरा जार आ भगम्।" इत्येवमादिषु ऐतिहासिकैर्योऽश्लीलोऽर्थो वर्ण्यते, तन्निरुक्तपद्धत्या निराक्रियते। यतो हि–"आदित्योऽत्र जार उच्यते। रात्रे र्जरयिता, स एव भासाम्।।" तस्या. कालः सूर्यास्तमयादारभ्य उषस उदयात् प्राक् वर्तते। अयं च मध्यवर्ती कालः अश्विनाविति संज्ञा लभते। इमौ अश्विनावेव सरण्यूपुत्रौ वर्तेते।

एवमेव निरुक्तसम्प्रदाये उर्वशी पुरूरवा वा नैतिहासिकौ पुरुषौ, परं विद्युन्मेधावेव।

समासत इदमेवोच्यते यन्निरुक्तसम्प्रदायः प्राधान्येन वेदमन्त्राणां तद्देवतानां च आधिदैवतव्याख्यां विधत्ते, याज्ञिकसम्प्रदायश्चाधियज्ञमाधिभौतिकं वाऽर्थं कुरुते, अध्यात्मवादिनश्च तेषामाध्यात्मिकी व्याख्यां विदधति। श्री यास्काचार्यश्च मन्त्राणा प्राधान्येन आधिदैवतव्याख्यां कुर्वन्नपि इतरं व्याख्याद्वयं न सर्वथा निराकुरुते। अपि तु स्वयमपि क्वचित्तथैव व्याख्यां विधत्ते। पर तृतीये ऐतिहासिके सम्प्रदाये नास्ति तस्य कश्चिदादरः। तन्मते ऋक्षु वर्णितस्यालंकारिकवर्णनस्य यौगिकस्य अर्थस्य चाज्ञानादेव ऐतिहासिकसम्प्रदायस्य जन्माभूत्।

—०—

आ त्वा रथं यथोतये सुम्नाय वर्तयामसि। तुविकूर्मिमृतीषहमिन्द्र शविष्ठ सत्पते।।१।।
तुविशुष्म तुविक्रतो शचीवो विश्वया मते। आ पप्राथ महित्वना।।२।।
यस्य ते महिना महः परि ज्मायन्तमीयतुः। हस्ता वज्रं हिरण्ययम्।।३।।
विश्वानरस्य वस्पतिमनानतस्य शवसः। एवैश्च चर्षणीनामूती हुवे रथानाम्।।४।।
अभिष्टये सदावृधं स्वर्मीलहेषु यं नरः। नाना हवन्त ऊतये।।५।।

—ऋग्वेद ८।७।६८।१–५।

—०—

# तन्मेमनः शिवसङ्कल्पमस्तु

लेखक–ब्र० याज्ञवल्क्यः–आर्यवानप्रस्थाश्रम–ज्वालापुर (सहारनपुरम्)

जगत्यामिह ये केऽपि मानसिक-वाचिक-शारीरिक-क्रिया-व्यवहारा विलसन्ति निखिलास्ते मनुष्यैर्मनसैव विधीयन्ते। न च मनोऽन्तरेण किञ्चिदपि कार्यं सम्पद्यते तत्सकलज्ञानविज्ञानमूलत्वात्। तथाहि निखिल-ज्ञान-विज्ञान-वेत्तारश्चित्तशान्तौ सततं विशेषं पुरुषार्थं समाचरन्ति।

वैयाकरणास्तु "मन्यते बुध्यतेऽनेनेति (मन ज्ञाने)" इत्यस्माद्धातोः "सर्वधातुभ्योऽसुन्" इत्युणादिषु साधयन्ति शब्दमेनम्।। वाचोयुक्तिपटवश्च "युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्।। न्याय०१।१। १६ इत्यङ्गीकुर्वन्ति मनोलक्षणम्। वैशेषिकास्तु "आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम्।। वै० ३।२।१।। इति चित्तस्वरूपं वर्णयन्ति। मनोनाम संकल्पविकल्पात्मिका अन्तःकरणवृत्तिरित्यपरे। तस्य पर्यायास्तु "चित्त तु चेतो हृदय स्वान्तं हृन्मानसं मनः" इत्यमरे व्याख्याताः।सत्त्वरजस्तमोभेदतो मनसि सङ्कल्पविकल्पाः समायान्ति। तथाहि सत्त्वगुणान्वितस्य चित्तस्य समुपन्यस्ता गुणास्तज्ज्ञैः सुधीभिः–

आस्तिक्यं प्रविभज्य भोजनमनुत्तापश्च तथ्यं वचो
मेधाबुद्धिधृतिक्षमाश्च करुणाज्ञानं च निर्दम्भता
कर्मानिन्दितमस्पृहञ्च विनयो धर्मः सदैवादरादेते
सत्त्वगुणान्वितस्य मनसो गीता गुणा ज्ञानिभिः।।

सत्त्वगुणान्वितं चित्तं हि कल्याणाय भवति। तादृशे मनस्येव श्रेष्ठा विचारा निवसन्ति। तथात्वे सञ्जाते चित्ते धृतिक्षमादिगुणा जनेषु प्रादुर्भवन्ति। तेन मानवाः कृतकृत्याः सम्पद्यन्ते देवत्वञ्च समधिगच्छन्ति। सत्त्वगुणप्रधाना विचक्षणा एवाऽसम्प्रज्ञातसमाधिं प्राप्नुवन्ति। अपि च योगभाष्ये महर्षिर्व्यास उवाच–

श्रद्धा चेतसः सम्प्रसादः। सा हि जननीव कल्याणी योगिनं पाति। तस्य श्रद्दधानस्य विवेकार्थिनो वीर्यमुपजायते। समुपजातवीर्यस्य स्मृतिरुपतिष्ठते। स्मृत्युपस्थाने च चित्तमनाकुलं समाधीयते। समाहितचित्तस्य प्रज्ञाविवेक उपावर्तते येन यथार्थं वस्तु जानाति। तदभ्यासात्तद्विषयाच्च वैराग्यादसम्प्रज्ञातः समाधिर्भवति। योगभाष्यम् १।२०।। अपि च ज्ञानविज्ञानसुधारसानन्दमप्याऽऽनन्दयन्ति समनस्का एव नेतरे। तथा चोक्तम्–

यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा।
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः।१।
यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः।२।
यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः।
न स तत्पदमाप्नोति संसार चाधिगच्छति।३।
यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः।
स तु तत्पदमाप्नोति यस्माद् भूयो न जायते।४।
कठोपनिषद् १।३।५–८।

रजस्तमोगुणान्वितस्य चित्तस्य किं स्वरूपमिति? अत्र लिख्यते–

क्रोधस्ताडनशीलता च बहुल दुःख सुखेच्छाधिका
दम्भः कामुकताप्यलीकवचन चाधीरताहङ्कृतिः।
ऐश्वर्यादभिमानितातिशयितानन्दोऽधिकश्चाटनं
प्रख्याता हि रजोगुणेन सहितस्यैते गुणाश्चेतसः।।
नास्तिक्यं सुविषन्नतातिशयितालस्यञ्च दुष्टा मतिः
प्रीतिर्निन्दितकर्मशर्मणि सदा निद्रालुताहर्निशम्।
अज्ञानं किल सर्वतोऽपि सततं क्रोधान्धता मूढता
प्रख्यातास्तमोगुणेन सहितस्यैते गुणाश्चेतसः।।
भावप्रकाशः ख० १

सकल-शान्ति-पीयूष-पानं पीयते किल शिवसङ्कल्पमनोभिरित्यत्र न हि सन्देह-कलङ्कावसरः केषामपि विचक्षणानाम्। शास्त्रप्रतिपादितत्वात्।

यतोहि मानव-जीवनस्य सार्थककार्यं खलु ब्रह्मदर्शनमेव "यस्तन्न वेद किमृचा करिष्यति" इति

श्रुतित्वात् । तच्चोपलभ्यते समाहितचेतसा । अत एव सुधीभिरवश्यमेव चित्तप्रसादे विशेषो यत्नो विधेय । अन्यथाहि मानवजीवनव्यर्थतापत्ति. । ननु कथ वयं समाहितचित्ता. स्याम ? इति सच्छास्त्रविहिता: केचन उपायप्रकाण्डाश्चित्त-परिशुद्धौ वक्ष्यन्ते । येनाऽनिष्टं विनश्यति लप्स्यते चेष्टम् । परञ्च श्रद्धावन्तो जना एव समुपलभ्यन्ते तत्त्व नेतरे । तस्मात् पूर्वं वय श्रद्धावन्तो भवेम । श्री भगवता कृष्णेन प्रोक्त मानसिक तप —

मन. प्रसाद. सौम्यत्व मौनमात्मविनिग्रह् ।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ।।
गीता १७।१६ ।।

नातपस्विना इष्ट प्राप्यते । अनादिकर्मक्लेश-वासना प्रत्युपस्थितविषया नाशुद्धिरन्तरेण तप: सम्भेदमापद्यते तस्मात्तपस उपादानम् ।। निर्विषय मन एव मोक्षप्रदं भवति तथाहि प्राह—

मन एव मनुष्याणां कारण बन्धमोक्षयो: ।
बन्धस्य विषयासङ्गि मुक्तेर्निर्विषयं तथा ।।
विष्णु पुराण ६।७ ।।

चित्तविज्ञानपारावारपारीणा श्री पतञ्जलि-भगवत्पादास्तु काश्चिदुपायप्रकाण्डान् चित्तपरिमृष्टौ कथयाञ्चक्रु: स्वस्मिन् योगदर्शने—

मैत्रीकरुणामुदितोपेक्षाणा सुखदु.खपुण्यापुण्य-विषयाणां भावनातश्चित्तप्रसादनम् ।। यो०१।३३।।

अर्थ:—सुखितेषु दु.खितेषु पुण्यवत्सु अपुण्यवत्सु च यथासंख्यं मैत्री, करुणा, मुदिता, उपेक्षा भावना भावनीया । एतावत्या भावनया मनसि प्रसादत्वं प्रजायते । सुखापन्नेषु मित्रतामेव विभावयेन्न कदापि ईर्ष्याम् । दु.खितेषु "ननु कथमेतेषां दु खं नश्येत् ।"इति कुर्यात्करुणामेव न तटस्थताम् । पुण्यवत्सु हर्षभावनामेव विभावयेन्न विद्वेषम् । अपुण्यवत्सु चोपेक्षामेव कुर्यान्नाऽनुमोदन नापि द्वेषम्। एतवता नैत्यिकेन व्यवहारेण अस्माक चित्ते प्रसादो भवितुं शक्यते । तेन विवेकस्रोत: प्रवहति यथावस्तु-स्वरूपं च विज्ञायते । अपि च भगवत्या श्रुत्याऽपि विज्ञापितम्—

यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योति-
रन्तरमृत प्रजासु ।
यस्मान्नऽऋते किञ्चन कर्म क्रियते
तन्मे मन: शिवसकल्पमस्तु ।।

अर्थ —हे जगदीश ! परमपितृपरमात्मन् ! मोक्षसुखप्रद ! सच्चिदानन्दस्वरूप ! प्रभो ! कृपया भवान् नश्चेतसि शिवसङ्कल्पमयान् विचारान् करोतु । यज्ज्ञानविज्ञानस्वरूपं धैर्यमूलं नाशरहित प्रद्योतमानमभ्यन्तरे चेतो वर्त्तते । येन सकल-कर्माणि क्रियन्ते । यस्मादृते जनाना मनागपि कार्य न भवितुमर्हति । निखिलविज्ञानमूलं तन्मन: शिव-सङ्कल्पमय स्यात् । यथाहि वय कृतकृत्या विदित-वेदितव्या अधिगतयाथातथ्या नीरक्षीरविवेकज्ञा. समधिगतसकलवेदज्ञा: स्याम तथाहि वैशिष्ट्य मन: भद्रकारि भवान् कुर्यात् ।

—:०:—

# वेदलहरी

( वृत्तं-शिखरिणी )

श्रीहरिश्चन्द्रो रेणापुरकरः एम. ए. प्राध्यापकः शासकीय महाविद्यालय गुलबर्गा (मैसूर राज्य)

विसर्गादौ लीलाजनितजगदाधारविधिना
जगत्कल्याणार्थं परमकरुणापूर्णमतिना ।
मुनीनामाद्यानां विमलहृदयेषु प्रकटितं
श्रुतेर्नाम्ना ख्यातं जयति भुवने ज्ञानममरम् ।१।

सुधास्यन्दिस्रोतः सकलवसुधाधर्मसरितां
जगत्तत्वज्ञानप्रमुखजननस्थानमजरम् ।
निधानं विद्याना जगति निखिलानामनुपम
जगत्क्षेमं तन्वञ् जयति भुवने ज्ञानहिमवान् ।२।

निराशङ्कं पूर्णं विविधमतवादैर्विरहितं
परब्रह्मज्ञानं स्खलितरहितं मङ्गलमयम् ।
अखण्डं सौभ्रात्रं जगति मनुजानामुपदिशत्
त्रिकालाबाधं सञ्जयति भुवने ज्ञानममरम् ।३।

स्फुरज्ज्ञानज्योतिः प्रखरकिरणैश्चण्डपतनै–
निराकृत्य ध्वान्तं दिशि दिशि ततं मोहजनितं
महाबोधाभावाविरलतिमिरे मग्नमखिलं
विरक्षन् संसारं जयति भगवान् वेदतपनः ।४।

त्रिलोकी संतप्तां त्रिविधभवतापाग्निघृणिना
निदाघोष्मातप्ताञ् जलद इव वृष्ट्या भुवि जनान् ।
लसद्भिर्ज्ञानोस्त्रैर्मृदुलसुखदैश्चामृतमयैः
परां शान्तिं नेष्यन् श्रुतिशिशिरकान्तिर्विजयते ।५।

महामायावर्ते विषयमदकामोग्रमकरे
गभीरे दुःखाब्धौ निपतितजनान् दुःखविधुरान् ।
कृपादृष्ट्या युक्ता भयहरणदक्षा भगवती
समुद्धर्त्री भूयान्निगमतरणिर्लोकरतये ।६।

गिराधर्माकल्पादिकसमवृथाक्षुद्रकलहे
समासक्तं नश्यद् भुवनगतमानव्यमखिलम् ।
प्रदायैक्यादेशं मधुरसहजत्वस्य रुचिर
समुद्धर्ता वेदो जयति सुतरां ज्ञाननिकरः ।७।

सुकर्मज्ञानोपासनविधिषु सौम्यान्वयमयं
स्थिरीकृत्वा लोके त्रिविधभवतापं परिहरन् ।
समष्टिव्यष्ट्योर्यो मधुरतरमैक्यं च विदधत्
त्रयी विद्याकोषो भुवनहितदक्षो विजयते ।८।

जगद्व्याधेर्मूलं भवति जडमूर्त्यर्चनमिद
निराकारानादेरनुपमजगद्व्यापकविभोः ।
चिदानन्दैकस्य प्रयतमनसा पूजनमसा-
वभीक्ष्णं जोघुष्यञ् जयति भुवने वेदनिकरः ।९।

महाशक्त्या व्याप्तं भवति भुवनं चैव रचितं
ह्यतो भोग्यं सर्वं भवति मनुजैस्त्यागसहितम् ।
धनं कस्य स्विद्धो इति निगमयन् वेदभगवान्
समाधत्ते सम्यग् जगति विषमं स्वत्वकलहम् ।१०।

नरास्तुल्याः सर्वे जननकृतवैषम्यरहिता
मिथः सौहार्दं तत्सहजरमणीयं भवतु वः ।
समानो वो मन्त्रो भवतु समितिश्चापि हि समा
तथा श्रेष्ठादेशं श्रुतिभगवती यच्छति वरा ।११।

विशेषो वेदानामितरमतशास्त्राद्भवति यः
यथातथ्या एके भुवननियमानामनुगुणाः ।
तथा तर्कोपेता अपि च नवविज्ञानसहिताः
परं दूरा अन्ये क्वचन विपरीता अपि वहु ।१२।

परब्रह्मज्ञानत्वमिति सकलैः शास्त्रनिवहैः
समुद्घुष्टं येषां प्रयतमुनिवृन्दैश्च निखिलैः ।
महाज्ञानागारत्वमपि च न येषां कलहितं
जगत्सौख्यार्थं तान् श्रयत मनुजा ज्ञाननिचयान् ।१३।

अनेकैः पाश्चात्यैरपि च विबुधैर्मुक्तहृदयैः
कजीन्स् हीरेनादिप्रथितपुरुषैर्धीरधिषणैः ।
१"महाज्योतिस्स्तभा" "मनुजसुखशान्त्युत्स" इति यद्
महत्व वेदानामितग्मतशास्त्रात्प्रकटितम् ।१४।

भवध्वं भो ! ख्रैस्ता व्रजतपदवीमीशुमसिहां
वदत्येवं ह्येको भवत यवना यूयमखिला: ।
महावीरं बुद्ध व्रजत शरण चैवमितरौ
परं वेदादेशो भवत मनुजा इत्थमिह भो. ।१५।

घृणाहिंसामर्षप्रतिभयमहादावदहने
स्थिरां शान्ति विश्वे विविधमतवादैः कलहिते
वय वाञ्छामश्चेत् सुदृढतमभित्तौ रचयितु
तदा नान्य: पन्था श्रुतिगदितमार्गानुसरणात् ।१६।

1 'Path to Peace' by Dr. James Cousins Page 60
'Historical Researches' by Prof. Heeren Vol 11 Page 127.

——:o-o:——

# मुखाकृतितत्त्वसमीक्षासूत्रम्

लेखक : विद्यामार्त्तण्डो श्री डा० मङ्गलदेवशास्त्री, वाराणसेयविश्वविद्यालयस्य पूर्वोपकुलपतिः

रागादिवशाद् विकृतिमञ्चित्तमनु मुखाकृतिविकृतिः ।१।
पित्तादिदोषवशाद् विकृतिमत्स्वास्थ्यमनु तथा ।२।
मुखाकृतिरतस्तयोरभिव्यञ्जिका ।३।
तत्र मुखे दर्पण इव तदवस्थयोः प्रतिसङ्क्रान्ति. ।४।
नाटचादिविशेषावस्थासु तु तदपवादोऽस्वाभाविक: ।५।
प्रतिसङ्क्रान्तिरनवस्थायिन्यपि प्रभावावशेषा ।६।
तत्कृतश्च बाल्यावस्थातस्तत्र भेदस्तदनन्तरम् ।७।
तत्र सयतचेतसः सततममूढा महात्मान एवापवादाः ।८।

अन्येषामभीष्टदेवताया अभिध्यानेन वा महता सता सगतेर्माहात्म्येन वा मुखाकृतिविकृतेर्निरन्तरं परिहारेण चेत. शरीरयोरुभयोरपि स्वास्थ्यलाभः । ततश्च चित्तं शरीरं च मुखाकृतौ यथा, तथा मुखाकृतिरपि तयोः प्रभावमाधातु समर्थेति मनोविज्ञानसिद्धान्तः ।।१

१. तदत्र द्रष्टव्यं महाभाष्ये ( १।३।६७ ) "द्वावात्मानौ । अन्तरात्मा शरीरात्मा च । अन्तरात्मा तत्कर्म करोति येन शरीरात्मा सुखदुःखे अनुभवति । शरीरात्मा तत्कर्म करोति येनान्तरात्मा सुखदुःखे अनुभवतीति ।

श्री

# हिन्दी विश्वभारती-चन्द्र तत्त्वानुसंधान परिषद
# बीकानेरम्

मान्याः

सुविदितमेवेदं समेषां विदुषां यत् साम्प्रत पाश्चात्यै वैज्ञानिकैर्महता समारम्भेण विधीयते चन्द्रतत्त्वान्वेषणम् । तत्तद्यन्त्रसाहाय्येन संगृहीतानि च तैः सहस्रशश्चन्द्रधरातलचित्राणि, परं नाद्यावधि तैश्चन्द्र-द्रव्यादिविषये निर्णीतं किमपि याथातथ्येन । अस्माकं शास्त्रेषु च चन्द्रविषये सन्ति प्रतिपादिता नानासिद्धान्ताः । बीकानेरस्थहिन्दीविश्वभारत्या चेदानीं चन्द्रतत्त्वानुसन्धानसमितिपरामर्शेन प्रचलति तत्तच्छास्त्रवर्णिततत्तत्सिद्धान्तानुसारं चन्द्रतत्वान्वेषणम् । समितिमते शास्त्रदृष्ट्या चन्द्रमसि प्रतीयते जलतत्त्वस्य प्राधान्यं, पाश्चात्यैश्च तन्निराक्रियते । वैशेषिकप्रशस्तपादभाष्यसेतुटीकाकारैः श्रीपद्मनाभमिश्रैश्चानुमीयते भौमदिव्योदर्याकरजचतुर्विधतेजोऽन्तर्गतदिव्यतेजसि चन्द्रमसोऽन्तर्भावः । तैजसे विषये चन्द्रमसोऽन्तःपाते कथं नोपलभ्यते चन्द्रमसि उष्णस्पर्शः! जलतत्त्वेनाभिभवाच्चेन्नोपलभ्यते उष्णस्पर्शस्तर्हि किं जलतत्त्वमप्यभिमतं चन्द्रमसि कणादशास्त्रस्य ।

अपरं च-तैजसं हि सुवर्णम् अत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानजन्यद्रवत्ववदस्ति । यन्न भवति अत्यन्तानलसंयोगे अनुच्छिद्यमानजन्यद्रवत्ववत् न तत् तैजसं यथा पार्थिवं तत्त्वम् । प्रकारेणामुना साधितः सुवर्णे पार्थिवांशस्याभाव., तथैव किं तैजसे चन्द्रमसि अपि पार्थिवांशस्याभाव एव, वर्तते वा तत्र पृथिवी? किञ्च तैजसं शरीरं यथा आदित्य लोके तथैव किं तैजसं शरीरं चन्द्रलोकेऽप्यस्ति । अस्ति चेत् यथा पार्थिवावयवोपष्टम्भात् आदित्यलोकस्थं तैचसं शरी रमुपभोगक्षमं तथैव किं चन्द्रलोकीये तैजसे शरीरेऽपि पार्थिवावयवोपष्टम्भनमस्ति नवा ? अस्ति चेत् कथं तत्र पार्थिवांशस्याभावो वक्तुमर्हः ?

अथ चेच्चन्द्रस्तेजसो विषयस्तदा कस्यायं भोग्यः ?

इत्यादयः प्रश्ना अन्ये च तत्तच्छास्त्र-प्रतिपादितवर्णनानुसारं समुद्भूताः प्रश्ना विविधशास्त्रज्ञैस्तत्रभवद्भि र्मन्यैरवश्यं समाधास्यन्त इत्याशास्ते—

**पत्रसंकेतस्थानम्**
**हिन्दी विश्वभारती-बीकानेर**
**चै० शु० १ सं० २०२४**

**विश्वनाथ मिश्रः**
**(आचार्यः शार्दूल संस्कृत विद्यापीठस्य)**
हिन्दी विश्वभारती चन्द्र-परिषत्-सदस्यः

# वाक्यपदीयम्

श्रीसोमदेवशर्मा एम.ए. साहित्याचार्यः गवेषणापरायणः दिल्ली विश्वविद्यालयः

अस्ति खल्वेतदुभये तावद्वेदान्तिन एकत्विनो द्वैतिनश्च। एकत्विनोऽद्वैतिन इत्यनर्थान्तरम्। ये हि तत्त्वत एकमेव वस्तु सर्वपरिकल्पनातीत भेदसंसर्गसमतिक्रान्तमनाश्रितादिनिधनं, तदितरच्च, सर्वं प्रातिभासिकमुपाधिशक्तिभेदपरिकल्पित परमार्थतोऽसच्चातिष्ठन्ते त एवैकत्विनः। ये तु तस्मादेकस्माद्वस्तुनोऽन्यदपि वस्तुजातमविचाल्य प्रमाणसिद्धं परमार्थसदभ्युपयन्ति त एव द्वैतिनः। उभयेषामप्यमीषां स्वप्रेक्षानुसारोन्नीत आम्नाय एव प्रमाणम्। तथा चोक्तम्—

**तस्यार्थवादरूपाणि निश्चित्य स्वविकल्पजाः।**
**एकत्विनां द्वैतिनां च प्रवादा बहुधा गताः॥**

तत्र प्रथमे केचन शब्दाद्वैतमपरे च ब्रह्माद्वैतमातिष्ठमाना स्वं स्वं मतमुपोद्बलयन्ति। ये खलु-भर्तृहरिप्रभृतय. शब्दतत्त्वमेकमेव परमार्थत. सत् तदितरत् सर्वमपि प्रपञ्चजातं तदभिन्नं तद्विवर्तं परमार्थतोऽसच्च सङ्गिरन्ते त एव शब्दाद्वैतिनः। इत्थं हि तन्मतसर्वस्वमुद्घोष्यते—

**'अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥**
**एकमेव यदाम्नातं भिन्नशक्तिव्यपाश्रयात्।**
**अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनेव वर्तते॥**

त एव द्वितीये ये खलु ब्रह्मतत्त्वमेकमेव सजातीयविजातीयभेदगन्धरहितमसत्याज्ञानानन्दव्यावृत्त शुद्धबुद्धमुक्तनित्यस्वरूपमातिष्ठन्ते-भगवत्पादादयः। ब्रह्माद्वैतवादी मण्डनोऽपि मात्रया शब्दाद्वैतवादमनुगृह्णानः कटाक्षयतीति सुविशदं तद्ग्रन्थपरिशीलिनाम्। एवं चोक्तम्—"तस्माच्छब्दतत्त्वमेव तथा तथाऽवभासत इति साम्प्रतम्" इति; 'सर्वज्ञेयं वाग्रूपान्वितं गम्यत इति तद्विकारस्तद्विवर्तो वा' इति च।

तत्र यः खलु शब्दाद्वैतवादी भर्तृहरिः स स्वकीये वाक्यपदीये शब्दाद्वैतं सुस्थमुपन्यस्यन् स्वस्य शब्दतन्त्रागममित्थमुपदर्शयति पुरा पाणिनीये व्याकरणे व्याडघुपरचित लक्षग्रन्थपरिमितं संग्रहाभिधानं निबन्धनमासीत्। तच्च कालवशात् सुकुमारमतीन् वैयाकरणान् प्राप्यास्तमुपयदुत्सन्नप्रायमभवत्। अथ व्याकरणतन्त्रस्याविच्छेदमभिवांछन् भगवान् पतञ्जलिर्महाभाष्यं निबबन्ध। एतच्च महाभाष्यं वररुचिकृतवार्तिकानां व्याख्यानरूपं संग्रहसंक्षेपभूतमेव। एतच्च भाष्यं बैजिसौभवहर्यक्षादिभि. शुष्कतर्कानुसारिभिर्विप्लावितमभूत्। दिष्टचा कुतश्चित् सत्सम्प्रदायमधिगम्य ब्रह्मरक्षसा केनचित् चन्द्राचार्यवसुरातादीना दत्तम् वसुरातेन भर्तृहरयेऽय व्याकरणागमः समुपदिष्ट.। तेन च वाक्यपदीय नामकाण्डत्रयपरिमितं निबन्धरत्नमुपरचितमिति।

महाभाष्यकारं भगवन्त पातञ्जलि बहवो ग्रन्थकृतश्चूर्णिकारमामनन्ति। तथाहि—अयमेव भर्तृहरिः स्वकीयमहाभाष्यत्रिपादीव्याख्यायां दीपिकायामेवं ब्रवीति—"चूर्णिकारस्तु भागप्रविभागमनाश्रित्य कृत्स्न एव वर्णे उभयस्थानः। यथा भ्राष्टपक्वः किलोशीपक्वश्च? (तिलपक्वश्च)। तत्र मुखवचनोऽप्यसौ नासिकावचनोऽपि यथा भ्राष्ट्रपक्वोऽपि असौ किलोशीपक्वोऽपि? (तिलपक्वोऽपि)" इति मुखनासिकासूत्रे। ईदूत्सूत्रेऽपि—"तपरस्तत्कालस्येति तत्कालाना ग्रहणं यथा स्यात् कथ पुनर्भेदकत्वमुदात्तादीनां यावताऽनज्ञादीनामुदात्तवचनभेदकत्वे ज्ञापकमुक्तं चूर्णिकारेण" इति। घुसंज्ञा सूत्रे च—"चूर्णिकारस्तु विकाराणाम्" इत्यादि। अत्र च वाक्येषु चूर्णिकारो महाभाष्यकार एवेति विषयसंवादादवगम्यते। काव्यालंकारसंग्रहव्याख्याने प्रतिहारेन्दुराजोऽपि—"चूर्णिकारस्य त्वेवमादौ तद्भावाध्यवसानसमाश्रयेण नातिशयोक्ति-

भेदत्वमेवेष्टम् । यदाह न तिङन्तेनोपमानमस्तीति'' इति वदति । ''न तिङन्तेनोपमानमस्ति'' इति वाक्यं च सन्निधायके सूत्रे भाष्ये परिदृश्यते । अतश्च चूर्णिकारो महाभाष्यकार एवात्र सर्वत्र विवक्षितः। ''चूर्णिः'' इति महाभाष्यस्यैव नामान्तर स्यादित्यप्यूहितु शक्यते ।

वाक्यपदीयव्याख्याता वृषभदेव. 'सूत्राणा सानुतन्त्राणा भाष्याणा च प्रणेतृभि.' इति कारिकास्थिता वृत्तिमेव व्याख्यत् ''अनेकत्वात् भाष्यस्याह--संग्रह इति। चूर्णिकारेण पठितम् 'संग्रहएतत्' इत्यादि तेन ज्ञायते संग्रहप्रणेत्रा नित्यत्वमभ्युपगतमिति । अनुतन्त्रभाष्य इति पातञ्जलभाष्ये'' इति । अन्यत्र च--''अनुतन्त्रं वार्तिकम् । भाष्याणामिति चूर्णीदीनाम्'' इत्याह । पस्पशान्हिके भाष्ये-'संग्रहएतत्प्राधान्येन विचारितं नित्योऽनित्यो वेति' इति वाक्यमुपलभ्यते । अतश्चूर्णिकारं महाभाष्यकृतमेव विवक्षति वृषभदेवः ।

वस्तुतस्तु भर्तृहरिणा त्रिपादीव्याख्यायां क्वचिद्भाष्य इति क्वचिच्चूर्णि इति च पृथग्व्यपदेशात्पातञ्जलभाष्यादन्य एव कश्चिच्चूर्णिग्रन्थ इति वक्तु शक्यते । किञ्च महाभाष्य व्याचक्षाणो भर्तृहरिः 'चूर्णिकारस्तु' इति तु शब्दसहचरितेन चूर्णिकारशब्देन मतान्तरस्थितमिव भगवन्तं पतञ्जलिमेवाभिदधातीति न हृदयङ्गमम् । अतश्च चूर्णिभाष्यनामानौ द्वौ पृथगात्मानौ ग्रन्थौ । अद्यत्वे सुलभो महाभाष्यग्रन्थस्तु तत्र तत्र चूर्णिसंवलित एव परिदृश्यते । अपि च पातञ्जलं भाष्यमनुतन्त्रव्याख्यानरूपमिति वृषभदेवो ब्रवीति । परिदृश्यमाने च महाभाष्ये सूत्रव्याख्यानमपि दृश्यत इति कथमसौ समग्रो ग्रन्थः पातञ्जलो भवेदिति विमर्शका विमृशन्तु ।

चूर्णिग्रन्थ आचार्यकुणिकृत इत्यपि वर्तते कश्चित् प्रवाद. ।

अस्मिन्नवसरे प्राप्तकालमिदमपि विमर्शकाना सविध आवेद्यते वाक्यपदीयं नाम सुप्रसिद्ध भर्तृहरिविरचितं प्रबन्धरत्न कारिकावृत्त्युभयरूपमेव । भर्तृहरि स्वकृता. कारिका. स्वयमेव वृत्तिकरणेन व्याचख्यौ । प्राचीनानामेषैव शैली यत् स्वकृतकारिकाणा स्वयमेव वृत्तिकरणेन व्याख्यानमिति । ब्रह्मसिद्धयादयो ग्रन्थास्तथैव वर्त्तन्ते । बहवो ग्रन्थकारा वाक्यपदीयस्थानीति कारिकाभिन्नान्यपि वाक्यान्युदाहरन्ति । वाराणसीमुद्रिते वाक्यपदीयकोशे ब्रह्मकाण्डस्थकारिकाणां काचन वृत्तिः परिदृश्यते ता च वृत्तिं परिशोधकः पुण्यराजकृतां प्रकाशाभिधा चाभिधत्ते । ब्रह्मकाण्डावसाने च ''इति श्रीमहावैयाकरणहरिवृषभविरचितवाक्यपदीयप्रकाशे आगमसमुच्चयो नाम ब्रह्मकाण्डं समाप्तम्'' इति मुद्रित दृश्यते । वस्तुतो विचार्यमाणे भर्तृहरिविरचिता काचिदस्ति वृत्तिः किञ्चिद्विस्तृता । सैवात्र संगृहीता मुद्रितेति स्पष्टमवगम्यते । मद्रपुर ( मद्रास ) स्थराजकीयलिखितपुस्तकालये स्वोपज्ञवृत्तिसमेता. भर्तृहरिकारिका. साम्प्रतमुपलब्धा वर्तन्ते । तस्या एव वृत्तेः सग्रहो मुद्रित । व्याख्याता वृषभदेवो विस्तृताया एव वृत्तेर्व्याख्यानमरचयदिति तत्रत्यप्रतीकोपादानेन निश्चीयते । नूतनोपलब्धे ब्रह्मकाण्डान्ते । इति हरिवृषभमहावैयाकरणोपरिचते वाक्यपदीये आगमसमुच्चयो नाम ब्रह्मकाण्डः समाप्तः'' इति परिदृश्यते । भर्तृहरेरेव हरिवृषभ इति नामान्तर स्यादिति शक्यते वक्तुम् ।

एवं च तद्वृत्तिपरिशीलनेन ''भर्तृहरिः बौद्ध'' इति केषाञ्चित् प्रवादोऽपि निरस्तो भवति ।

——:०:——

# साहित्य-समीक्षा

समालोचनार्थं प्रतिपुस्तकद्वयं पत्रिकाकार्यालये प्रेषणीयम्

**सांख्यसिद्धान्तः**

भाष्यकारः—श्री. पं. उदयवीर शास्त्री। प्रकाशकः—श्री स्वामी विज्ञानानन्द सरस्वती, अध्यक्षः विरजानन्द वैदिक संस्थान, गाजियाबाद, पृष्ठ संख्या ५३६, मूल्यम् १६।

बृहत्कायोऽयं ग्रन्थो दर्शनशास्त्राणां पारावारावगाहनपटोः श्रीमत उदयवीरशास्त्रिमहाभागस्यैव विद्यते। आस्तिकश्रेण्यां परिगणितानि यान्यृषिप्रणीतानि भारतीयदर्शनानि विद्यन्ते तानि सर्वाणि सूत्रेषूपनिबद्धानि सन्ति। अत्यल्पाक्षरसन्दृब्धानि वचनानि विद्वद्भ्योऽपि दुर्बोध्यानि जायन्ते बालसुलभचञ्चलबुद्धिभ्यश्छात्रजनेभ्यस्तु सुतरां भवन्त्येवेत्यत्र नास्ति संशीतिलेशोऽपि। अतः सुखबोधाय सूत्रोक्तरहस्यमयग्रन्थीनां विषयाणां वा सरलीकरण परमावश्यकम्। अस्मिन् ग्रन्थे विद्वत्तल्लजेन पुरुषनाम्ना प्रख्यातौ विवादपदभाजौ जीवेशौ विस्तरेण प्रदर्श्य जगत उपादानं त्रिगुणात्मकं प्रकृतितत्त्व तद्विकृतिरूपाणि च सरलभाषायां निबन्धरूपेण विलिख्याधुनिकभौतिकविज्ञानेन तेषा समन्वयः सामरस्यं च प्रतिपादितम्। रसायनशास्त्रेण च यानि शताधिकानि मूलतत्त्वान्यङ्गीकृतानि तानि नैव मन्तव्यानीत्यपि संक्षेपेणोल्लिखितं स्वविचारजातं विदुषा महाभागेन। सांख्यमतस्याधुनिकविज्ञानेन सह तुलनात्मकं विवेचनं विधायाभिनवोऽयं पन्थाः प्रादर्शि। सृष्टिविषयकं यद्विचारजातमन्येषामाचार्याणां विद्यते न तत् सांख्यमतविरुद्धं परं परस्परं प्रपूरकमिति विभावनीयं सुज्ञैः। सृष्टिविषयकज्ञानायाधुनिकभौतिकविज्ञानस्य गर्वोक्ति र्न कदापि मर्षणीया प्रत्युत धर्षयितु प्रयत्नो विधेयो विचारदक्षैर्विज्ञपुरुषैरिति सत्प्रेरणाऽस्य विदुषः। कापिलं मतं न वेदविरुद्धमिति सूक्ष्मेक्षिकया दृष्टमनेन प्रतिवादिपक्षप्रहारदक्षेण शास्त्रिप्रवरेण। अस्य विद्वद्वरेण्यस्य साहित्यसेवामभिलक्ष्य पुरस्काराभिनन्दनानि नैकैरर्पितान्यस्मै। यथा—

१२००) मंगलाप्रसाद
१२००) उत्तरप्रदेश सरकार
१०००) विहार राष्ट्रभाषा परिषत्
१०००) सेठ हरजीमल डालमियाट्रस्ट

वयमपि सर्वोत्तमग्रन्थप्रणयनकर्तृविद्वच्छिरोमणिभूतस्य भृशमभिनन्दनं कुर्मः। ग्रन्थानां च प्रभूतं प्रचारं वाञ्छामः।

—भगवद्दत्तो वेदालंकारः

# सम्पादकीय टिप्पण्यः

अयि! सुरभारतीप्रणयिनः शिष्टाः सम्मताः प्रियपाठकाः सविनयं निवेद्यन्ते यद् गुरुकुलपत्रिकाया विंशतितमवर्षस्याङ्कद्वयसम्मिलितोऽयं ब्रह्मराशिर्भवतां पुरतः प्रस्तूयते। सर्वप्रथमं गुरूणामपि गुरुं तमादिदेवं भगवन्तं वाचस्पतिं देवीं च सरस्वतीं भूयो भूयः प्रणोनुमो ययोः कृपाकटाक्षेण प्रत्यहं वेदसेवा कर्तुं पार्यतेऽस्माभिर्वेदविरुद्धेऽस्मिन् घोरे कलिकाले सत्यपि। भवन्तो विजानन्त्येव यदस्याः पत्रिकायाः प्रत्येकस्मिन्नङ्के प्रायो द्वित्रा वेदविषयका लेखा स्थानं लभन्ते। वेदेषु प्रेमातिशय एवात्र कारणम्। एवमेव पत्रिकाया विशेषाङ्को वेदाङ्कोऽप्ययमधुना भवतां पुरतः समुपस्थितः। अस्मिन्नङ्के बहूनां विद्वद्धौरेयाणां प्रख्यातवैदुष्याणां वेदविचारप्रवणानां विदुषां भिन्नभिन्नविषयानुपजीव्य संलिखिता लेखा विराजन्ते। दुरूहो वेदार्थबोध इतिकृत्वा नैतद् वक्तुं पारयामो वयं यत् किञ्चिद् विचारजातमत्र प्रकटीकृतं तत् सर्वं समीचीनमन्यूनं केनाप्यङ्गेनाहीनं विद्यते।

मन्ये, तत्र मतवैपरीत्यं भवितुमर्हति, प्राक्तनार्षदृष्टयाऽपि विरुद्धं भवितुं शक्नोति । परं मिथो विजिगीषूणां पक्षविपक्षयो स्तर्कप्रमाणादिसवलितं वाचोवीर्यातिरेकप्रदर्शनं विज्ञानाविष्करणायैव भवतीति नात्र संशीतिलेशोऽपि । अस्माकमेषोऽप्यभिलाष आसीत् यत् पत्रिकाया विशेषाङ्कस्तु वेदस्य कमप्येकं विषयं देवतां वाऽवलम्ब्य प्रकाशनीयो यथा पूर्वं विष्णुदेवतामाश्रित्य सुविशदं बृहत्कायो विशेषाङ्को विष्णवङ्कनाम्नास्माभिः प्रकाशित आसीत् । परं यथाभिलषितं लेखाः प्राप्स्यन्ति न वेति संशयदोलायामधिरूढं नश्चेतः । अनेन हेतुना केवलं वेदाङ्कनाम्नैवायं विशेषाङ्क. प्रकाशितः । आशासे, भविष्यति सत्यां प्रार्थनाया विद्वत्तमा लेखकमहोदया नूनं स्वकृतिसम्प्रेषणेनास्मासु महतीमनुग्रहसन्तति वितनिष्यन्ते । अस्मिन् वारेऽप्यृषिसम्बन्धी मम निबन्धो भवतां नयनातिथिर्भविष्यति। पूर्वं कदाचिल्लिखिता लेखाः शनैः शनैः प्रकाश्य भवतां पुरतः समुपस्थाप्यन्ते । प्रायोऽध्यात्मदृष्टया ते लिखिताः सन्ति । वेदानामध्यात्मतत्त्वमस्मभ्य बहु रोचते, तस्मिन्नेव चास्माकं बहुलायास. । अनेनैतन्न मन्तव्य यद् वयमध्यात्मतत्त्वानां तत्साधनानां वा पण्डितास्तत्प्राप्त्युपायज्ञा वा । केवलं तस्मिन् विषयेऽस्माकं प्रगाढा रुचिः परमानुरक्ति मुंखरयति तल्लेखने हस्तं प्रवर्तयति बुद्धि च प्रचोदयति । तच्चिन्तने संलगति मन । एषोऽप्यस्माकं प्रयासो भवति यत्र केवल तत्र पाण्डित्य प्रदर्शनीयं परं सामान्यजनधीगम्यमप्युपपादनीयम् । मन्ये यत् प्रच्छन्नं गुप्तं सरहस्यं सर्वं वेदतत्त्व कथमपि न सर्वसुलभं सुबोधगम्यं भवितुमर्हति तत्तु परमयोगिनां महर्षीणां भाग्येष्वेवापतितम् । परं तथापि मादृशैः केवल तत्र रुचिमादधानैः पुरुषैः प्रयासस्तु करणीय एवेति कृत्वाऽनन्तेऽगाधे वेदपारावारे प्रायशो मादृशां सन्तरणेच्छूनां निरुक्तिव्याकरणाद्यरित्रै नियमिता कदाचिच्च मनसां जवेन सन्दोलिता प्रज्ञातरणिरेव शरणम् । परं नायं योगिनां साक्षात्कृतधर्मणां वा महर्षीणां पन्थाः । यतो हि तेषां हृदि सरहस्यं सार्थकं च छन्दोबद्ध मन्त्रजातं प्रादुर्भवति । नियतार्थका नियतवाचो वेदवाण्यः सततस्थायिन्यो निगदिता परब्रह्मणि तासां भेदनं बिल्मरूप निर्वचनादिकमनितरसाधारणानामल्पबुद्धीनामस्मादृशां पुरुषाणां सुखबोधायैव पश्चात्कालिकं विद्यते । सृष्टयादौ तु ब्रह्मतुल्याय ब्रह्मर्षिसंघाय निरुक्तव्याकरणादिवेदाङ्गाना साहाय्य नापेक्ष्यते । पुरा वेदानां रक्षा शासनस्य प्रमुखं कर्तव्यमासीत् । परमद्यतनं शासनं तु धर्मनिरपेक्षताव्याजेनाधार्मिकतामेव प्रवर्धयति । अन्यच्चाय धर्मनिरपेक्षतावज्रोऽपि हिन्दूनामेव शिरसि निपतितः । ईसाईमुस्लिमधर्मानुयायिन. कथमपि धर्मनिरपेक्षा न जायन्ते । काश्मीरनागादिप्रदेशेषु ते स्वच्छन्दं नरीनृत्यन्ते । तिब्बतप्रदेशोऽधुना चीनप्रदेशः सञ्जातः । भवतु नाम तत्र जनगणना नान्यः कोऽपि विपरीतः परिणामो भविष्यति । परं काश्मीरप्रदेशेऽन्यप्रदेशवास्तव्यो न कोऽपि वस्तु शक्नोति । सैषा विद्यते दुर्भाग्यपूर्णा स्वच्छन्दशासकानुसृता नीतिः । भाषाविषयेऽप्यांग्लकद्रवाः दासीभाव प्रापिता विनता राष्ट्रभाषा । पूर्वं सस्कृतप्रचारायैव केन्द्रीयसर्वकारेण प्रान्तीयैर्वा दृढोद्योगो न विधीयते वेदाना तु कथैव का । मनागपि साहाय्यमनालभ्य ये वेदेषु प्रयतन्ते तेभ्यो नमोऽनूचानेभ्यो नमो नि.स्पृहेभ्यो नम इज्येभ्यो नमो यस्तान् द्वेष्टि तं वो जम्भे दध्मः । इति प्रार्थनामेव कर्तुं पारयामो वयम् ।

अस्मिन्नंके बहूनां वेदविदुषां सारगर्भिता लेखा विद्यन्ते । आशास्महे यत्तेषां स्वाध्यायं विधाय वेदभक्ताः प्रियपाठकाः स्वजीवनं सफलीकरिष्यन्ति। वयं तान्प्रति कृतज्ञतां प्रकाशयामः । यत्किञ्चित् त्रुटिपूर्णं दोषजातं भवेत् तन्नीरक्षीरविवेकिनो राजहंसाः क्षमिष्यन्तीत्योम् । —

# वैदिकधर्म-गीतम्

रचयिता : श्रीपण्डितधर्मदेवो विद्यामार्तण्डश्चतुर्वेदी (देवमुनिर्वानप्रस्थः)–ज्वालापुरम्

सर्वोत्तमवैदिकधर्मोऽयं, सार्वभौम इह धर्मः ।
अस्य प्रचारकर्ता लोके, भुवि सर्वोत्तमकर्मा ।१।
एकेश्वरपूजा हृदि कार्या, नान्यो देव उपास्यः ।
इत्थं शिक्षा यस्य शोभना, वन्द्यो वैदिकधर्म. ।२।
क्षुद्रभावना नैव समुचिता, नास्पृश्यो भुवि कश्चित् ।
प्रीत्या सर्वे जना विलोक्याः, ब्रूते वैदिकधर्म. ।३।
ज्ञानकर्मशुभभक्तिसमन्वय एव लोकहितकारी ।
श्रद्धामेधायोगः कार्य., कथयति वैदिकधर्मः ।४।
बुद्धिविरुद्धं न हि खलु किञ्चित्, अस्मिन् वैदिकधर्मे ।
व्यष्टिसमष्टिसमन्वयकारी, नूनं वैदिकधर्मः ।५।
भोगत्यागसमन्वय उचितः, कार्यो वै व्यवहारे ।
मध्यमार्ग एवास्ति श्रेयान्, वदति सुवैदिकधर्मः ।६।
ईश्वरपुत्राः सर्वे समानाः, नहि जात्यादिकभेदः ।
शिक्षां ददत्सर्वजनमान्या, मान्यो वैदिकधर्मः ।७।
यादृक् कर्म नरो भुवि कुरुते, तादृक् फलमपि भुक्ते ।
अचलकर्मनियम इह लोके, कथयति वैदिकधर्मः ।८।
आत्मा नित्योऽजरोऽमरोऽयं, मृत्योर्भयं कुतो भो. ।
इत्थ निर्भयता संचारी, श्रेष्ठो वैदिकधर्मः ।९।
यज्ञधर्म इह सर्वजनाना, भुवि कल्याण कुरुते ।
कर्तव्यं तस्यानुष्ठानं, कथयति वैदिकधर्म· ।१०।
सर्वे प्राणभृतो हि विलोक्या. मित्रदृशा किल मनुजै. ।
सर्वेषामुपकारः कार्यः, कथयति वैदिकधर्मः ।११।
मान्यो यः कर्तव्यपरायण आर्यः स एव वाच्यः ।
इत्थं सर्वानार्यान् कर्तुं, निगदति वैदिकधर्मः ।१२।
नह्यनेन सदृशोऽखिललोके, श्रेष्ठतरस्तु कथं स्यात्?
देवेनादिष्टः सर्गादौ, वन्द्यो वैदिकधर्मः ।१३।
गुणगणसिन्धुदयामयदेवो, ददौ वैदिकं ज्ञानम् ।
सर्वहितार्थं जगदुपक्रमे, वन्द्यो वैदिकधर्मः ।१४।
वेदाध्ययने नूनमधिकृताः, सर्वे श्रेयस्कामाः ।
भुवनेऽखिले प्रचार्यः सुखदः, शान्तिदवैदिकधर्मः।१५।

——:०-०:——

# वैदिक धर्म गीत

रचयिता : श्री पं० धर्मदेव विद्यामार्तण्ड ( देवमुनि वानप्रस्थ), आनन्द-कुटीर, ज्वालापुर

वैदिक धर्म हमारा अनुपम, वैदिक धर्म हमारा ।
यह है जिसने कोटि जनों को, इस जग मे है तारा ।।
एकेश्वर पूजा सिखलाता, भेदभाव को दूर भगाता ।
प्राणिमात्र से प्रेम बढाता, प्राणों से बढ़ करके प्यारा।

ज्ञानकर्म शुभ भक्ति मिलाता, श्रद्धा मेधा मेल कराता ।
अन्धकार को दूर हटाता, है यह हृदय उजारा ।
बुद्धि विरुद्ध नही कुछ इसमे, व्यष्टि-समष्टि मेल है इसमे ।
त्याग भोग मिल जाते इसमे, मत पन्थो से न्यारा ।।

सब है ईश्वर पुत्र समान, कल्पित ऊंच नीच नहिं जान ।
करो देव का गुणगणगान, वह भवसागर तारन हारा ।।
जो करता है वह भरता है, अटल नियम यह नित रहता है ।
आत्मा नित्य नही मरता है, सिखला निर्भय करने हारा ।।

यज्ञ-धर्म है श्रेष्ठ महान्, करता है सबका कल्याण ।
इसके बिना नही उत्थान, यह है शुभ उन्नति का द्वारा ।।
समझो सबको मित्र समान, गुण कर्मों के कारण मान ।
करलो वेदामृत का पान, जो सन्ताप विनाशन हारा ।।

आओ आर्य बनें हम सारे, कर्तव्यों का पालन-हारे ।
प्रभु विश्वासी कभी न हारे, जिसने सबका दु:ख निवारा ।।
बने आर्य जग आर्य बनावें, न्याय सत्य अनुराग बढ़ावें ।
सच्चे ईश्वर पुत्र कहावें, 'सत्य धर्म की जय' हो नारा ।।

